UGC JOURNAL NO-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED & PEER-REVIEWED QUARTERLY RESEARCH JOURNAL)

४४ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २०१९ ई०

प्रधानसम्पादकः

प्रो० रमेशकुमारपाण्डेयः

कुलपतिः

सम्पादकः

प्रो० शिवशङ्करमिश्रः

शोधविभागाध्यक्षः

सहसम्पादकः

डॉ० ज्ञानधरपाठकः

शोधसहायकः




प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

UGC JOURNAL NO-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED & PEER-REVIEWED QUARTERLY RESEARCH JOURNAL)

४४ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २०१९ ई०





प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानित-विश्वविद्यालयः)

कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली-११००१६



ISSN :- 0974 - 8946

**४४ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २०१९ ई०**



मुद्रकः - अमरप्रिंटिंगप्रैसः, दिल्ली

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य अनुसन्धान-प्रकाशन-विभागीया शोध-पत्रिका

❖ एषा त्रैमासिकी शोध-पत्रिका।

❖ अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

❖ अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

❖ अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

❖ अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

❖ प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

❖ अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशितशोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्ण दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।

❖ पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।

❖ अस्याः वार्षिकसदस्यताराशिः रु. ५००.०० पञ्चवार्षिकसदस्यताराशिः रु.२०००.००, आजीवन-सदस्यताराशिः रु. ५०००.००। सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

❖ पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

**अपध्वान्तमूर्णूहि पूर्धि चक्षुः** इत्यस्याभिप्रायवेदमवधारय इदं यदात्मनः संस्कारादेव मनुष्यो यावल्लभ्यं लब्ध्वा चारितार्थ्यमुपैति। अत एव 'अपध्वान्तम् ऊर्णूहि' इत्येष मन्त्रभागः प्रथमं कृत्यं तम आच्छादनायोपदिशति। तदेव प्रविष्टः 'ऊर्णूञ् आच्छादने' धातुरिति। स्पष्टमेतत् यत्संस्कारेणापद्रव्यस्य निराकरणं गुणाविष्करणञ्च विधाय तस्य किमप्यपूर्वं विरच्यते। संस्कृतोऽपि जनो यावत् सदुपदिष्टो न भवति तावत् रिक्त इव किमपि लोकोत्तरमाचरितुं बुद्धिबलं नार्जयति। तदेव प्रार्थ्यते पूर्धि चक्षुरिति। एकवचनमार्षं जातौ वा। तात्पर्यमिदं प्रसिद्ध्यति यदस्माकं विवेकदृष्टिस्तादृशेन केनचित् प्रकाशनेन पूरणीया, येन सत्यस्य पिहितमपि मुखमुद्घास्य तदाधृतं सुखराशिं वयमनुभवाम इति। लोकहिताय प्रवर्तामह इति। स्वस्त्यस्तु विश्वस्येति प्रार्थयामहे। इदमेवावधार्य सर्वपथीनं सार्वभौमानां कृत्यजातम्। अनेनैव जनाः स्वच्छान्तःकरणाः सन्तः स्वकीयं परकीयञ्च निरस्य अजस्रमजरञ्च जनहितं समाचरन्ति। स्मृतिरपि समर्थयति सिद्धान्तमेनम्। तथा चोक्तमेव "अयं निजः परो वेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कुटुम्बकम्" इति। अनेनैव भावेन विश्वस्य कल्याणं सम्भवि, तस्माद्दृढं मन्ये नास्त्येतद्व्यतिरिक्तः कश्चिदन्यः पन्था इति। तदर्थमेव शास्त्राण्यबाधितं ज्ञानं प्रतिबोधयन्ति, ऋषयश्च तत्पश्यन्ति, मुनयश्च स्वीकुर्वन्ति। एवंपरम्परया वयमपि स्वकीयेन पुण्येन तल्लभामहे। तेनैव सकलोऽपि विश्वः समुदाचारतत्परो भवत्विति चिन्तकानां सुहृदामनितरसाधारणप्रयासः। स एव प्रयासः परम्परया अस्मभिरपि अनुष्ठीयते। सर्वकारोऽपि तत्रैव दत्तावधानः स्वोपजीविनः प्रेरयति। अतः तदुद्भाव्य आर्जवेनार्जनाय कश्चिल्लघुतर उपायो नूनमेव ध्येयः। मन्येऽहमार्षज्ञानमबाधितमिति हेतोः शास्त्राण्येव तत्रास्पदानि। साम्प्रतमस्माकं सुधिय आचार्या अहोरात्रं परिश्रम्य स्वकीयेनानुभवेन च नवनीतजातमभिनवतथ्यं यदुद्भावयन्ति, तदुद्भूतं सत् सर्वेभ्योऽपि सुलभतरं स्यादिति हेतोस्तत्प्रापणं प्रकाशनाद्व्यतिरिक्तं न सेत्स्यतीति साग्रहं मन्यमानैः स्फीतं प्रकाशनं कर्म अस्माभिरपि सावधानेनानुष्ठीयते। साहाय्यन्त्वाचार्याणामेव। उद्देश्यन्तु सर्वसुधीजनप्रबोधनम्। अनेनैवानुसन्धित्सवोऽपि साफल्यमेष्यन्ति। तदेव विद्यापीठेन शोधप्रभाभिधेया काचिदपूर्वा पत्रिका प्रकाश्यते। अयञ्च क्रमः सौभाग्यात् पुण्यप्रकर्षाच्च स्वानुरूपं गुणमाकलय्यानवद्यमतति। वोढारश्च मनोरथानवाप्य कार्तज्ञ्यं भजन्ते। अयमप्यङ्कः पूर्वतो निधरितक्रमेण त्रयोदशपाठान् सङ्कलय्य व्याकरण-साहित्य-वास्तु- कर्मकाण्ड-पुराण-न्याय-ज्योतिषादिविषयाणां गूढतत्त्वान्युद्भाव्य समक्षमुद्यतः।

तदयं सर्वेषां कल्याणाय प्रवर्ततामिति प्रार्थयमानः स्वेष्टदैवतं चिन्तये-

**प्रो. रमेशकुमारपाण्डेयः**
**कुलपतिः**

# सम्पादकीयम्

संस्कृतं भारतीयसंस्कृतेः आत्मतत्त्वम्। संस्कृतं नाम दैवी वाक् अन्वाख्याता महर्षिभिः। एतत्प्रभावादेव निखिलेऽस्मिन् जगति प्रतिष्ठितास्माकं भारतीया संस्कृतिः। भारतीयसंस्कृतेः वैभवाद् कृत्स्नेऽपि नभसि भारतस्य गौरवपताका दोधूयमाना विराजते। इयं च संस्कृतिः संस्कृतं विना सर्वथा निष्प्राणभूता। अतो भारतस्य ज्ञानवैभवम्, भारतस्य गुणगणगौरवम्, भारतस्य विपुलमैतिह्यम्, भारतीयं जीवनं चरित्रं शस्त्रं शास्त्राञ्चावबोद्धुमेकमेव यत् श्रेष्ठतमं साधनं वरीवर्ति, तदस्ति संस्कृतम्।

संस्कृतमाध्यमेनैव भारतस्य विस्तरेण परिचयः प्राप्तुं शक्यते। भारतं यैर्गुणनिचयैः स्वस्मिन् माहात्म्यमवधारयति, विश्वेऽस्मिन् वैशिष्ट्यमावहति तत्सर्वमत्र देववाणीतः समागतम्। किं बहुना भारतस्य व्याख्या परिभाषा च संस्कृतेनैव व्याख्यातुं पार्यते नान्यथा, अतएवोच्यते-

**संस्कृतेनैव सुसम्पुष्टं भारतं भारतमुच्यते।**
**संस्कृतेन विना देशः केवलं चेण्डियोच्यते।।**
**उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।**
**वर्षं तद् भारतं नाम भारती यत्र सन्ततिः।।**

संस्कृतमस्मासु संस्कारं जनयति, ऐक्यं सम्पादयति, विश्वबन्धुत्वं स्थापयति, मित्रभावं परिष्करोति **संगच्छध्वं संवदध्वम्** इति भावं दृढ़ीकरोति, सर्वेऽपि सुखिनः सन्तु इत्यौदार्यं सन्दिशति किमधिकं सर्वत्र शान्तिसंस्थापनाय, अहिंसा-सत्य-अस्त्येय-ब्रह्मचर्य-अपरिग्रहभावानां विस्ताराय, शौच-सन्तोष-तपः-स्वाध्यायेश्वरप्रणिधानाय भारते संस्कृतमेवानितरसाधारणसाधनं सम्भवति। इयमत्यन्तं लोकोपकारिका, अमृतसमा, माधुर्यसंवाहिका, कर्णौ सुखं ददती आत्मन्याह्लादं जनयति, लोकं ददाति लोकोत्तरञ्च संसाधयति अतएवोद्घोषितं केनचित् कविना-

**अमृतं मधुरं सम्यक् संस्कृतं हि ततोऽधिकम्।**
**देवभोग्यमिदं तस्माद्देवभाषेति कथ्यते।।**

सम्प्रति भारतसर्वकारः संस्कृतस्य संरक्षणाय संवर्धनाय च बद्धपरिकरो दृश्यते। कथं संस्कृतस्य वातावरणं सर्वत्र सम्भवेत्? कथं संस्कृतं जनभाषा भवेत्? कथं संस्कृतसम्भाषणे सामान्योऽपि जनः दक्षो भवेत्? इति विषये निरन्तरं चिन्तयन्ती संस्कृतभारती अहर्निशं कार्यं करोति। तस्य प्रभावोऽपि समाजे दरीदृश्यते जनः अल्पाभ्यासेनापि अत्यन्तं सारल्येन संस्कृतसम्भाषणे दक्षो भवति। सन्देशोऽयं मनः आत्मानञ्च नितरां सन्तोषयति।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः त्रयोदशशोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभासम्पन्नैः नदीष्णैः सुधीभिः अनुसन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्चान्वेषणमनुष्ठितम्। अनुसन्धानपथि प्रवृत्तानामाचार्याणामनुसन्धातृणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्विति धिया निकषधिषणापूरितविषयवस्तुजातस्य प्रकाममुद्बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् विद्वांसो मनीषिणः।

**प्रो. शिवशङ्करमिश्रः, शोधविभागाध्यक्षः**

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

ISSN - 0974-8946 शोधप्रभा
अप्रैल-जून, 2019 वर्ष: 44, द्वितीयोऽङ्क:

# पाणिनिव्याकरणे वास्तुविद्या

**प्रो. सुजाता त्रिपाठी**

समस्तवैदिकवाङ्मय: ज्ञानस्य विज्ञानस्य च प्रतिपादनं करोति। सर्वेषां शास्त्राणां मूलाधार: वेद एव। वेदाश्च चत्वार: प्रसिद्धा:, तेषां चत्वार: उपवेदा: अपि सुविख्याता: वर्तन्ते। ते च -

| ऋग्वेद: | यजुर्वेद: | सामवेद: | अथर्ववेद: |
|---|---|---|---|
| ↓ | ↓ | ↓ | ↓ |
| आयुर्वेद: | धनुर्वेद: | गान्धर्ववेद: | स्थापत्यवेद: |

अथर्ववेदस्य उपवेद: स्थापत्यवेद एव कालान्तरे वास्तुशास्त्रनाम्ना शिल्पशास्त्रनाम्ना च प्रसिद्ध:। संस्कृतसाहित्ये कलाविषयकाणि त्रीणि शास्त्राणि सन्ति - वास्तु:, शिल्पम्, चित्रञ्चेति। आचार्यै: शिल्पं तथा चित्रं वास्तुशास्त्रस्यैवाङ्गत्वेन स्वीकृतं वर्तते। भारतीयवास्तुशास्त्रस्य प्रमुखोद्देश्यं वर्तते। सर्वविधसुखसमृद्धिशान्त्यादिप्रदानमे। वास्तुशास्त्रं ज्योतिषशास्त्रस्याङ्गमस्ति तथा ज्योतिषशास्त्रं तु वेदाङ्गत्वेन परिगणितं वर्तते। वेदाङ्गेषु ज्योतिषशास्त्रं वेदस्य चक्षुर्वर्तते। चक्षु: स्वकर्तापर्यन्तं ज्ञानस्य सम्प्रेषणमन्यज्ञानेन्द्रियाणामपेक्षया शीघ्रं करोति। ज्योतिषशास्त्रेण वास्तुशास्त्रमाध्यमेन एतज्ज्ञानाय प्रयास: विहित: यत् व्यक्ति: सर्वविधसुखं समृद्धिं शान्तिं प्राप्य कथमभ्युदयञ्च प्राप्तुं शक्नोतीति।

आचार्या: पाणिनिव्याकरणे वर्णितसूत्राणामाधारेण प्रमाणयन्ति यत् वास्तुविद्या अथवा नगरमापनादिशास्त्रमस्तित्वे आगता: वर्तन्ते इति। नगरे यानि अनेकप्रकारकाणि भवनानि अथवा निवासस्थानानि भवन्ति तेषां नामानि अष्टाध्याय्यां यथा - "राजसभा"[1], "सभा राजाऽमनुष्यपूर्वा" इत्यादि। प्राचीनवैदिक: शब्द: वास्तोष्पति: अर्थात् वास्तुदेवताया: अपि नाम पाणिनिसूत्रे उल्लिखितं वर्तते। तद्यथा - "द्यावापृथिवीशुनासीरमरुत्वदग्नीषोम- वास्तोष्पतिगृहमेधाच्छ च"[2], गृहम्= गृह:[3], निवास:= निकाय्य[4], शाला=छात्रिशाला[5], कोष्ठागार:[6], निषद्या[7], द्वारम्[8], कपाटम्[9], परिधि:[10],

---

* आचार्या, व्याकरणविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियविद्यापीठम्, नवदेहली

1. पा.सू. 2.4.23
2. पा.सू. 4.2.32
3. पा.सू. 3.1.144
4. पा.सू. 3.1.129
5. पा.सू. 6.2.86
6. पा.सू. 4.4.70
7. पा.सू. 3.3.99
8. पा.सू. 4.3.86
9. पा.सू. 3.2.54
10. पा.सू. 8.2.22

इत्यादिशब्दानामुल्लेखो वर्तते।

वस्तुतः शालाशब्दः वैदिकशब्दः वर्तते, यत्तु गृहस्य कृते प्रयुक्तो भवति स्म। पाणिनिकाले शालाशब्दस्य व्यापकप्रयोगः द्रष्टुं शक्यते। राज्ञः सभाः, आस्थानानि मण्डपानि भवन्ति स्म, तान्यपि शाला इति कथ्यते। "अशाला च"[1], "छात्रिशाला"[2], गोशाला, खरशाला[3] इत्यादिशब्दानामपि उल्लेखः पाणिनिना कृतः। अन्नस्थापनस्थानमपि शाला इत्येव कथ्यते, यत्र नीच्चैः प्रति निर्मितमुखं शालाबिलमिति कथ्यते स्म[4]। आचार्यपाणिनिना एतादृशाधिकारीणामुल्लेखः कृतो वर्तते यैः विशेषप्रकारागारस्य प्रबन्धनं तथा अधिकारादिकं स्वीक्रियते स्म। तद्यथा - "तत्र नियुक्तः"[5], "अगारान्ताट्ठन्"[6] इत्यादि। काशिकायां भाण्डागारः, देवागारः, कोष्ठागारः इति त्रयः प्रकारकाः अगाराः तथा तत्र नियुक्ताधिकारिणामुल्लेखः वर्तते। अगारः स्थूलकायभवनं भवति स्म, यत्र बहवः भागाः भवन्ति स्म। अगारस्य एकः भागः प्रघणः तथा प्रघाणः कथ्यते स्म। काशिकाकारेण तस्यार्थः बाह्यद्वारप्रकोष्ठमिति कृतं वर्तते, यं गुप्तकालस्य भाषायामलिन्द इति कथ्यते स्म। बाह्यद्वारप्रकोष्ठं स्थूलभवनसमीपे निर्मितं तादृशं द्वारं भवति यत्र बहूनि प्रकोष्ठानि भवन्ति स्म एवं यत्र महाकपाटं पिधीयते स्म। पथिकानां कृते निर्मितविश्रामगृहस्य निषद्या इति संज्ञाशब्दः आसीत्। "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः"[7] इति।

एकशालिकः/ऐकशालिकः तादृशगृहं यत् केवलमेकस्यैव कृते प्रयोगे आगच्छति- "एकशालायाष्ठजन्यतरस्याम्"[8] एकशाला इव इति। इष्टकचित्शब्दे इष्टिकायाः उल्लेखः "इष्टकेषीकामालानां चिततूलभारिषु"[9] इति सूत्रे वर्तते। वैदिकयुगे इष्टिकाः निर्मीयन्ते स्म। गृहस्य प्रासादस्य कृते छदिस्शब्दः आसीत्, यत्तु सम्भवतः ग्रामे निर्मितगृहस्य उपरिभागस्य कृते प्रयोगः भवति स्म। "छदिरुपधिबलेर्ढञ्"[10] इत्यस्योदाहरणे प्रासादे उपयोगिनं तृणं छादिषेयतृणमिति कथ्यते। कपाटं नाशय सर्वेषामग्रतः एव चोरकार्यकरणे कपाटहनशब्दः प्रचलितः आसीत् "शक्तौ हस्तिकपाटयोः"[11] इति। गृहस्यार्थे वैदिकक्षयशब्दः पाणिनिकालीनभाषायामपि प्रयुक्तमासीत् "क्षयो निवासे"[12] इति। आवसथः तथा आवसथ्यशब्दः तस्य गृहस्य कृते प्रयुज्यते स्म यत् यज्ञशालायाः समीपे आवसथ्याग्नये निर्मीयते स्म अथवा यत्र विशिष्टातिथीनां स्वागतादिकं विधीयते स्म तथा च सूत्रम् -

---

1. पा.सू. 2.4.24
2. पा.सू. 6.2.86
3. पा.सू. 4.3.35
4. पा.सू. 6.2.102
5. पा.सू. 4.4.69
6. पा.सू. 4.4.70
7. पा.सू. 3.3.11
8. पा.सू. 5.3.109
9. पा.सू. 6.3.65
10. पा.सू. 5.1.13
11. पा.सू. 3.2.54
12. पा.सू. 6.1.198

"अनन्तावसथेतिहभेषाजाञ्ञ्यः"[1] इति।

नगरमापनस्य दिशायां कापिशी, तक्षशिला, शाकलः, हस्तिनापुरम्, सांकाश्यमित्यादि प्रसिद्धनगराणामुल्लेखः सूत्रेषु वर्तते। महाभारते लिखितमस्ति यस्मिन् समये युधिष्ठिरेण इन्द्रप्रस्थनगरं निर्मितं तदा युधिष्ठिरेण व्यासं तथा श्रीकृष्णादिप्रतिष्ठितदेवपुरुषमाहूय प्रारम्भिकोत्सवादिकं विहितम्, तथा नगरस्य कृते नियतभूमौ सूत्रमापनेन निश्चयो विहितः यत् परिखा, प्राकारः, राजप्रसादः, गोपुरम्, चत्वरः, वीथीत्यादीनां स्थानं कुत्र कुत्र भविष्यतीति। एतदेव नगरमापनमिति कथ्यते स्म। तद्यथा - "नगरं मापयामासुः द्वैपायनपुरोगमाः"[2] "परिखाया ढञ्"इति। नगरे निवासात् प्राक् वास्तुविद्याचार्याः तदर्थनिश्चितभूमेः प्रथमं संस्कारं कुर्वन्ति स्म, भूमिशोधनानन्तरं नगरमापनं क्रियते स्म। "नगरं वैदेहेन सुभाषितम्, उम्मगजातकः" इति। नगरनिर्माणे परिखायाः, प्राकारस्य, द्वारस्य च निर्माणं सर्वप्रथमं भवति स्म। अर्थशास्त्रे उल्लेखं वर्तते यत् दुर्गविधानस्य तथा पुरसन्निवेशस्य कृते परिखानिर्माणं सर्वप्रथममावश्यकम्। "परिखाया ढञ्"[3] इति पाणिनिसूत्रानुसारेण पारिखेयी भूमिः इति तां लम्बायमानं भूमिं कथ्यते स्म या नगरनिवेशस्य समये दुर्गस्य सर्वतः अवकाशस्य कृते त्याज्यते स्म। एतत्तु ज्ञातव्यं यत् प्राचीननगरस्य पुरस्य वा सन्निवेशः दुर्गवदेव निर्मीयते स्म तथा रक्षायाः कृते उच्चपरिधिनिर्माणमावश्यकं भवति स्म। "तदस्य तदस्मिन् स्यादिति"[4] इति सूत्रस्य अधिकारः "परिखाया ढञ्" इत्यत्रापि आगच्छति। अनेन ज्ञायते यत् केन प्रकारेण नगरनिर्माणात् प्राक् सामग्र्यः एकत्रीक्रियन्ते एवं तदा सूत्रमापनं भवति। काशिकायामस्य त्रीणि महत्वपूर्णानि उदाहरणानि सन्ति - प्रकारीया इष्टकाः, प्रासादीया भूमिः, प्रासादीयं दारु। एभिः शब्दैः साकं यदि सूत्रे पठितः पारिखेयी भूमिः इति शब्दं संयोज्यते चेत् तदा नगरमापनस्य एकं चित्रं भविष्यति। अत्र प्रथमा, अत्र द्वितीया अत्र तृतीया एवं प्रकारेण तिस्रः परिखाः उत्पाटनस्य उद्देश्येन नियता भूमिः पारिखेयी भूमिः भविष्यति, परिखा अस्मिन् देशे स्यादिति। परिखायाः कृते भूमिः नियता सति तदनन्तरमाभ्यन्तरं प्रति सर्वतः परिधिनिर्माणस्य कृते स्थानं नियतं भवति स्म। तमेव प्राकारीयदेशमिति कथ्यते, प्रकारोऽस्मिन् देशे स्यादिति।

परिखायाः प्राकारस्य च स्थानं निश्चिते सति नगरस्य दुर्गस्य चाभ्यन्तरे सर्वाधिकमहत्वपूर्णं स्थानं राजप्रासादस्य भवति स्म। अत एव तस्य स्थानमपि प्रारम्भे एव नगरस्य केन्द्रीयभागे निश्चितं क्रियते स्म। तस्य कृते उदाहरणमस्ति - प्रासादीया भूमिः, अर्थात् सा भूमिः यत्र राजप्रासादो भविष्यति। प्रासादोऽस्यां भूमौ स्यादिति, अस्मिन्नेव प्रसङ्गे ताः इष्टिकाः प्राकारीयाः इष्टकाः कथ्यन्ते, याः नगरनिर्माणस्य कृते निर्मीयते। पञ्चममुदाहरणं प्रासादीयं दारु इति वर्तते। राजप्रासादनिर्माणाय शाल्ववृक्षस्य आवश्यकता भविष्यति, भारतीयवास्तुविद्यायाः आरम्भिकयुगे राजप्रासादस्य तथा राजसभायाः निर्माणं काष्ठेन भवति स्म। तस्यैव कृते प्रासादीयं दारु इति पदं भाषायां प्रचलितमासीत्।

---

1. पा.सू. 5.4.23
2. म.भा. आदिपर्वः 199/27-29
3. पा.सू. 5.1.18
4. पा.सू. 5.1.16

**परिखा** –परिखा उत्पाटनस्य कार्यं प्रथमकरणस्य प्रयोजनमेतदासीत् यत् ततः निष्कासिता मिट्टिका प्राकारस्य इष्टिकानिर्माणे सहयोगं भविष्यति। अर्थशास्त्रे लिखितमस्ति दुर्गस्य सर्वतः तिस्रः परिखाः आवश्यकाः। एतासु मध्ये एका दण्डभूमिः त्यक्तव्या। प्रथमा परिखा 14 दण्डस्य, द्वितीया 12 दण्डस्य, तृतीया 10 दण्डस्य आसीत्[1]। एवम्प्रकारेण सम्पूर्णा पारिखेयी भूमिः 14+1+12+1+10=38 दण्डः (=228 फुट, एकदण्डः= 6 फुट) लम्बायमानं भवति। 5.2.38 सूत्रस्योदाहरणे काशिकायां द्विपुरुषी, त्रिपुरुषी इत्युदाहरणे स्त्रीलिङ्गे वर्तेते, ये परिखायाः संकेतं कुरुतः। 5.2.38 इति सूत्रे पाणिनिना यस्य पुरुषसंज्ञकमापस्योल्लेखो विहितः, सः अर्थशास्त्रस्यानुसारेण 84 अङ्गुलपरिमितो भवति।

**प्राकारः एवं देवपथः** –यद्यपि सूत्रे प्राकारशब्दो नास्ति तथापि कात्यायनेन वार्तिके प्राकारशब्दस्य प्रासादशब्दस्य चोल्लेखः विहितः[2]। कात्यायनस्य वार्तिके एतादृशी ध्वनिः वर्तते यत् सूत्रकारस्यापि तौ शब्दौ इष्टौ इति। पाणिनिना प्राकारस्य सम्बन्धे देवपथ इति महत्त्वपूर्णशब्दस्योल्लेखः विहितः[3]। पाणिनेरनुसारं देवपथशब्दस्य द्वौ अर्थौ स्तः, एकस्तु अकाशे विमानचारिणां देवानां मार्गः देवपथो भवति। द्वितीयस्तु आकाशे विद्यमानदेवपथसदृशः उच्चः यत्किञ्चिद्वर्तते सोऽपि देवपथः एव, देवपथ इव देवपथः इति।

भाष्ये पाटलिपुत्रनगरस्य विशिष्टप्रासादानां प्राकाराणाञ्चोल्लेखो वर्तते। सः कुत्रास्ति इति विषये यदि पाटलिपुत्रस्य भिन्नभिन्नावयवानां ज्ञानं कर्तव्यं वर्तते चेत् अयोध्यानगरीं दृष्ट्वा ज्ञातुं शक्यते। तात्पर्यमेतद्वर्तते शुंगकाले अयोध्याराजधानी आसीत्, तस्याः निर्माणं पाटलिपुत्रवत् जाता वर्तते। "पाटलिपुत्रस्य व्याख्यानी सुकोशला पाटलिपुत्रं चाप्यवयवश आचष्ट ईदृशा अस्य प्राकारः"[4] इति भाष्यम्।

**नगरद्वारम्** – प्राचीननगरे प्रायः चत्वारि द्वाराणि भवन्ति स्म। पाणिनिना नगरद्वारस्य नामकरणनियमस्य निर्देशः कृतः वर्तते यथा – "अभिनिष्क्रामति द्वारम्"[5] इति। अर्थात् द्वारस्य नाम तस्य नगरस्य नाम्ना भवति, यथा माथुरं कान्यकुब्जद्वारम्। अर्थात् कन्नौजनगरस्य द्वारं यतः मथुरायाः कृते मार्गं गच्छति। वर्तमानकालेऽपि नगरद्वारस्य नामकरणे एषा एव रीतिः वर्तते। यः मार्गः यं नगरं प्रति गच्छति तस्य नाम अपि तदेव भवति, यथा – "तद्गच्छति पथिदूतयोः"[6] इति।

एतेषु मार्गेषु पथिकानां निवासाय विश्रामस्थलं निर्मीयते स्म। यत्र लक्ष्यस्थाने मार्गः गच्छति तस्य नाम मयार्दा भवति। मध्ये विद्यमाननगरस्यापेक्षया एकतः पूर्वं तथा अपरतः परं भवति। अस्य

1. अर्थशास्त्रम् 2.23
2. पा.सू. 6.3.122 वार्तिकम्
3. देवपथादिभ्यश्च पा.सू. 5.3.100
4. पा.सू. 4.3.66 महाभाष्यम्
5. पा.सू. 4.3.86
6. पा.सू. 4.3.85

कृते पाणिनिसूत्रमपि वर्तते – "भविष्यति मर्यादावचनेऽवरस्मिन्"[1] इति। उदाहरणार्थं यदि साकेततः पाटलिपुत्रनगरं प्रति गमनबेलायां यदि मार्गे कौशाम्बी आगच्छति तर्हि सोकेततः कौशाम्बीनगरमध्यभागः अवरः तथा कौशाम्बितः पाटलिपुत्रपर्यन्तं परः इति भवति। तथा च भाष्यम् –"योऽयम् अध्वा गन्तव्य आपाटलिपुत्रात् तस्य यदवरं कौशाम्ब्याः तत्र द्विरोदनं भोक्ष्यामहे"[2] इति। भाष्ये साकेततः पाटलिपुत्रस्य तथा साकेततः स्रुघ्नदेशस्य मार्गविषये उल्लेखो वर्तते। एवमेव पाणिनिना "उत्तरपथेनाहृतं च"[3] इति सूत्रेण उत्तरपथविषयेऽपि चर्चा विहिता। एवम्प्रकारेण पाणिनिकालीननगरे नगररक्षार्थं परिखा, प्राकरः एवं द्वाराणि आसन्, एवमेव नागरिकाणां कृते गृहशालाः, आपणानि आसन्। तत्र राजसभा, कोष्ठागारम्, भाण्डागारम्, प्रेक्षायाः स्थानम् इत्यादयः नगरे तस्मिन् कालेऽपि आसन् इति शम्।।

---

1. पा.सू. 3.3.136
2. पा.सू. 3.3.136 महाभाष्यम्
3. पा.सू. 5.1.77

ISSN - 0974-8946
अप्रैल-जून 2019

शोधप्रभा
वर्षः 44, द्वितीयाङ्कः

# नामकरण-संस्कारस्तद्विषये च शाब्दिकानामभिमतम्

डॉ. दयालसिंहः पँवारः

## 1. भूमिका

"सर्वं शब्देन भासते" इति न केवलं शाब्दिकानां नयः, अपितु निखिलो लोकव्यवहारोऽपि हरि-कथनमिदं प्रमाणयति। इदं सत्यमेवाङ्गीकृत्य मानवेन स्वकीय-बुद्धि-कौशलेन न केवलं मूर्त-पदार्थानामपितु अमूर्तानां पदार्थानामवधारणानां च कृते शब्दाः कल्पिताः। इमे शब्दरूपाः वस्तुसङ्केता एव नाम, आख्या, अभिधानं, संज्ञा चेत्यादिभिः पदैः प्रकीर्त्यन्ते। संसारे यत् किमपि ज्ञेयं, तदभिधेयं भवति। वस्तुत इदं नामपदमेव सर्वेषां भवति प्राथमिकः परिचयः। संज्ञी प्रत्यक्षो भवतु परोक्षो वा, संज्ञया तद्विषयको बहुविधो व्यवहारः प्रवर्तत एव। नाम्न इदं माहात्म्यमालक्ष्यैव धर्मशास्त्रीय-संस्कार-परम्परायां नामकरणमिति महत्त्वाधायी संस्कारः स्वीकृतः। इदं स्पष्टं यन्नामकरणं तु सर्वस्य मूर्तस्य अमूर्तस्य वस्तुजातस्य भवति परं मानवस्य नामकरण-संस्कारस्तु भारतीय-समाजे उत्सवत्वेन गण्यते।

## 2. नामकरण-संस्कारस्य माहात्म्यम् -

शिशोर्जातकर्म-संस्कारादनन्तरं नामकरण-संस्कारो भवति। धर्मशास्त्रिभिराचार्यैर्ये केचनापि संस्काराः प्रकल्पिताः, ते नूनं मानवस्योत्कर्षायैव कल्पन्ते। किं बहुना, तदीयः अन्तिमः संस्कारोऽपि अग्रिमयात्रायाः साफल्येन सम्पादनार्थं कल्पते। शतपथब्राह्मणे अस्मिन् विषये विधिवाक्यं प्राप्यते - **"तस्मात् पुत्रस्य जातस्य नाम कुर्यात्।"**[1] कथं नामकरणं कर्म संस्कारो वा विधेय इत्यस्मिन् विषये वृहस्पतिराह -

**नामाखिलस्य व्यवहारहेतुः, शुभावहं कर्मसु भाग्यहेतुः।**
**नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नाम कर्म।।**[2]

## 3. नामकरण-संस्कार-कालः

प्रायशो ये षोडश संस्कारा आचार्यैः परिगण्यन्ते, तेषां भवति कश्चन विधिः कदा च तदायोजनं भवेदित्यस्मिन् विषयेऽपि शास्त्रे विचारणा भवति। जातकर्मसंस्कारादनन्तरं कदास्य संस्कारस्यायोजनं भवेदित्यस्मिन् विषये आचार्यैरनेकानि मतानि प्रस्तुतानि। एतद्विषये मनुराह-

**नामधेयं दशम्यां तु द्वादश्यामस्य कारयेत्**
**पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते।**[3]

अत्राचार्येण मनुना तिथिद्वयोल्लेखपुरःसरं सौविध्यानुसारेण अपरशुभमुहूर्तस्यापि विकल्पः प्रदत्तः। गोभिलः दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेयकरणं प्रतिपादयति। अस्मिन् विषये

---

* सहाचार्यः, व्याकरणविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016

1. शत. ब्रा. 6.9.3.7
2. वी.मि.सां. भाग। पृ. 249
3. मनु. आ.

याज्ञवल्क्य आह - **"अहन्येकादशे नाम"**

अस्मिन् सन्दर्भे महाभाष्यकारः व्याकरणाध्ययनस्य गौण-प्रयोजनानि प्रतिपादयन् कस्यचिद् गृह्यसूत्रकारस्य मतमुद्धरन्नाह - **"दशम्यां पुत्रस्य - याज्ञिकाः पठन्ति - दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद्"**[1] दशम्युत्तरकालं नाम एकादशेऽहनीति। यद्यपि अस्मिन् विषये भूयांसि मतानि विकल्पा वा उपलभ्यन्ते, तथापि सामान्यरूपेणाशौचव्यपगमे नामधेयकरणमिति प्रायश आचार्याणां मन्तव्यम्।

**4. नामस्वरूपविमर्शः**

जातस्य नाम-स्वरूप-विषयेऽपि आचार्यैः पर्याप्तं चिन्तनं कृतम्। अस्मिन् विषये भगवता महाभाष्यकारेण व्याकरणाध्ययनस्य गौण-प्रयोजनप्रतिपादनप्रसङ्गे गृह्यसूत्रकारस्य मतमेकमुद्धृतम्।

"घोषवदाद्यन्तरन्तः स्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम्। तद्धि प्रतिष्ठिततमं भवति। "द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्।" इति।"[2] अत्र नाम्नो नैके विशेषाः प्रतिपादिताः परमत्र उल्लेखनीयं यद् घोष-वृद्धान्तःस्थकृत्तद्धितादयो व्याकरणशास्त्रीयाः संज्ञाः वर्तन्ते। अतो व्याकरण-ज्ञानं विना तु नामकरणादयः संस्कारा अपि कर्तुं न शक्यन्ते। आदौ अस्य मतस्य उपस्थापनस्यायमपि विशेषो यदत्र नाम-निर्धारणे नास्ति कश्चन वर्ण-भेदो वर्गभेदो वा। नामाक्षर-विषयेऽपि भूयान् मतभेद आचार्येषु दृश्यते। नामाक्षर-विषये बैजवापमतमुदारं वर्तते। तदनुसारेण - **"पिता नाम करोति एकाक्षरं द्व्यक्षरं त्र्यक्षरं अपरिमिताक्षरं वा"**[3] परमत्र वशिष्ठ आह-**"तद् द्व्यक्षरं चतुरक्षरं वा,** विवर्जयेदन्त्यलकाररेफम्।" आश्वलायनस्तत्र अक्षरगुणानपि प्रतिपादयति। तथा हि - "द्व्यक्षरं प्रतिष्ठाकामस्तु चतुरक्षरं ब्रह्मवर्चस्कामः।" कस्य वर्णस्य कृते कीदृशं नाम स्यादित्यस्मिन् विषये मनुराह -

**मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्**
**वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्।**
**शर्मवद्ब्राह्मणस्य स्याद् राज्ञो रक्षासमन्वितम्**
**वैश्यस्य धनसंयुक्तं शूद्रस्य प्रेष्यसंयुतम्।।**[4]

बालिकानां नामकरणविषयेऽपि भूयांसि मतानि प्राप्यन्ते। नारीणां नामानि विषमाक्षरं आकारान्तं तद्धितान्तं च भवितुमर्हति। **"अयुजाक्षरमाकारान्तं स्त्रियै च तद्धितम्"**[5] बैजवाप-मतानुसारेण स्त्रीनाम त्र्यक्षरं ईकारान्तं च भवेत्। "त्र्यक्षरमीकारान्तं स्त्रियाः"[6] तासां नामकरणं नक्षत्र-वृक्ष-नदी-सर्प-सेवक-पक्षि-पर्वतादि-नामसु नैव विधेयम्। सामान्यरूपेण नारीणां नामस्वरूपं कीदृशं स्यादित्यस्मिन् विषये मनुराह -

**स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्**
**मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्।**

---

1. महा भा.
2. तदेव
3. वी.मि सां. भाग। पृ. 249
4. मनु. आ. 2
5. मा.गृ.सू. पृ. 9.93.3
6. वि.मि.सं.भा. पृ. 243

अनेकेषु स्थलेषु गोपनीय-नाम्नोऽपि अपि परम्परा आसीत्। तदनुसारेण नक्षत्राधारितं नाम गुह्यं भवति। अपरं नाम व्यवहारे प्रयुज्यते। नाम-धारके कश्चन् आभिचारिकः तान्त्रिको वा प्रयोगो मा भूदित्यस्मात् कारणादेव कदाचिदियं परम्परासीत्। नाम-स्वरूप-विषये यद्यपि बहवः पक्षाः वर्तन्ते, तथापि विस्तारभिया तेषां चर्चा इह न विधीयते।

## 5. नामकरणविधिः -

नामकरण-संस्कारस्य को विधिरित्यस्मिन् विषये गृह्यसूत्रेषु वर्णनं न प्राप्यते, तथापि स्वामि-दयानन्देन भीमसेन-शर्मणा, चेत्यादिभिः आधुनिकैर्मनीषिभिः विधेरुल्लेखः कृतः। सामान्यरूपेण शौचानन्तरं माता शुद्धवासोभि पुत्रं समाच्छाद्य बाल-शिरः जलेनाभिषिच्य बालस्य पितुः समर्पयति स्म। तदनन्तरं पिता चेतना-प्रबोधनार्थं पुत्रस्य श्वासप्रश्वासावलोकनं कुरुते स्म। तदनु जनकस्तस्य दक्षिणे कर्णे नामोद्घोषयति स्म ब्राह्मणाश्च "इदं नाम प्रतिष्ठितं भवतु" इत्युद्घोषयन्ति स्म। ततः परं पितृ-माध्यमेन शिशुना ब्राह्मणा अभिवाद्यन्ते स्म। तदनु आशीर्वाद-मन्त्रपाठ-देव-पितृ-विसर्जनानन्तरं संस्कारोऽयं सम्पद्यते स्म।

## 6. वैयाकरणानामभिमतम् -

नामकरणस्य वैशिष्ट्यं परिज्ञायैव महाभाष्यकारेण विविध-प्रसङ्गेषु नामकरणस्य चर्चा कृता। नाम-स्वरूपं कीदृशं स्यादित्यस्मिन् विषये भाष्यकारोद्धृतं मतमस्माभिः पूर्वमेवोल्लिखितम्। "वृद्धिरादैच्" इतिसूत्र-व्याख्यानावसरे "संज्ञाधिकारो न कर्तव्यः" इति पक्ष-पोषण-प्रसङ्गे भगवान् भाष्यकार इमां नामकरणविषयिणीं चर्चामुपस्थापयति। तद्यथा - "लोके तावन्माता-पितरौ पुत्रस्य जातस्य संवृतेत्रवकाशे नाम कुर्वाते देवदत्तो यज्ञदत्त इति। तयोरुपचारादन्येऽपि जानन्ति, इयमस्य संज्ञेति। वेदे याज्ञिकाः संज्ञाः कुर्वन्ति यूपः च शाल इति। तत्रभवतामुपचारादन्येऽपि जानन्ति इयमस्य संज्ञेति"।[1]

आचार्ययास्केनापि निरुक्ते नामाख्यातोपसर्गनिपाताश्चेति चतुर्विधः यः पदविभागः प्रदर्शितः, तत्रापि नाम प्राथम्यं भजते। वस्तुतः नाम संज्ञा वा कस्यापि पदार्थस्य प्रथमः अत्यन्तमेव महत्त्वाधायी परिचयो भवति, एतद्विना तु नानापदार्थानां व्यवहारो नैव सम्भाव्यते। इयमाख्या पदार्थेन सह घनिष्ठतया सम्बन्धं स्थापयति। यावत्पर्यन्तं पदार्थो लोके स्वीयमस्तित्वं धारयति, तावत्पर्यन्तं तदीया संज्ञा तदीयं नाम वा पदार्थविशेषं परिचाययति।

सामान्यरूपेण नाम-स्वरूप-विषये अस्मदीये शास्त्रे द्विविधं मतमुपलभ्यते। निरुक्त-शास्त्रेऽपि आचार्ययास्केन एतद्विषयिणी चर्चा कृता। प्रथममतानुसारेण सर्वाणि नामानि आख्यातजानि धातुजानि भवन्ति। शाकटायनाचार्यो वर्तते अस्य मतस्य प्रतिनिधिः। अयमेव व्याकरण-शास्त्रे व्युत्पत्ति-पक्षः। द्वितीय-मतस्य प्रतिनिधिर्वर्तते गार्ग्यः। तन्मतानुसारेण सर्वाणि नामानि आख्यातजानि न भवन्ति। व्याकरण-शास्त्रेऽयमेवोच्यतेऽव्युत्पत्ति-पक्षः। अस्मिन् पक्षे यदृच्छा-शब्दानां सत्ताप्यङ्गीक्रियते।

इदमालक्ष्यैव भगवता पाणिनिना स्वकीये शब्दानुशासने उभयविधयोः प्रातिपदिकयोः कृते सूत्रे निर्मिते। यथा - यदृच्छा-शब्दानां रूढ-शब्दानां कृते "अर्थवदधातुरप्रत्ययःप्रातिपदिकम्"[2] व्युत्पन्न-शब्दानां कृते च "कृत्तद्धितसमासाश्च"[3] चेति। अत्र उभयोः पक्षयोरयं विशेषो यन्नाम खलु अर्थवत् स्यादेव।

1. महा. भा. आह. 3 2. पा. आ. 1/2 46 3. पा. आ. 1/2 46

तस्मादेव "कृत्तद्धितयोः केवलयोरनर्थकयोः प्रातिपदिक-संज्ञा मा भूदि"तिधिया वैयाकरणैः द्वितीये सूत्रेपि "अर्थवदि"ति पदमनुवर्त्यते। अन्येषु देशेषु अन्यासु संस्कृतिषु वा काम निरर्थकानि नामानि धार्यन्ते, परमस्माकं परम्परायां सार्थकानि नामान्येव प्रशस्तानि मन्यन्ते।

व्याकरण-शास्त्रे अपत्य-प्रत्ययाः,गोत्रप्रत्ययाः, युव-प्रत्ययाः अपि सन्ति, येषां प्रयोगेण गौरवशालिभिः पूर्वजैः सह सम्बन्धान्वाख्यानं भवति स्म। यथा - दाशरथिः, गार्ग्यः, कात्यायनश्चेत्यादयः। आर्ष-परम्परायां तु नैके ऋषय एभिरेव गोत्रादिप्रत्यय-घटितैः नामभिः इयतीं प्रसिद्धिं प्रापुर्येन तेषां मूल-नाम तु लुप्तमेव जातम्।

**7. नामार्थ-ज्ञापन-विषयकाः कालिदासीयाः प्रयोगाः -**

इदमत्रोल्लेखनीयं यत् कविकुलगुरुणा कालिदासेन स्वकीयेषु काव्य-ग्रन्थ-रत्नेषु विविध-स्थलेषु अर्थवन्नाम-परम्परायाः निर्देशः कृतः। अत्र केचनैव उल्लेखाः प्रस्तूयन्ते।

रघु-नामकरण-प्रसङ्गे कविकुलगुरुराह -

**अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसम्भवम्।**[1]

दशरथ-नाम-निर्वचनं प्रदर्शयन्नाह -

**दशरश्मिशतोपमद्युतिम्, यशसा दिक्षु दशस्वपि श्रुतम्;दशपूर्वरथं यमाख्यया,**
**दशकण्ठारिगुरुं विदुर्बुधा।**[2]

**रामनाम-प्रसङ्गे= सावाह -**

**राम इत्यभिरामेण वपुषा तस्य चोदितः।**
**नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम्।।**[3]

कुमारसम्भवे पर्वतकन्या पार्वती कथमुमा नाम लेभे इत्युच्यते -

**तां पार्वतीत्याभिजनेन नाम्ना, बन्धुप्रियां बन्धुजनो जुहाव।**
**उमेति मात्रा तपसो निषिद्धा, पश्चादुमाख्यां सुमुखी जगाम।।**[4]

अत्र उ इति वितर्क-सम्बोधन-पादपूरणेषु। माङ् निषेधे। अत्र कालिदासीयैरनुसन्धानपरकैः प्रयोगैरिदं स्पष्टं भवति यत् नाम्नो गौरवमर्थवत्ता च कविकुलगुरोः सविशेषमभिमते।

**8. उपसंहारः**

इत्थमस्माभिः भारतीय-संस्कार-परम्परायां नामकरणस्य वैशिष्ट्य-प्रतिपादनाय न केवलं धर्म-शास्त्रीयः पक्षः परिशीलितः, अपितु शब्द-शास्त्र-दृष्ट्यापि विषयोऽयं विवेचितः। नामकरणस्य सार्थकत्वं काव्यादिनानाशास्त्रानुशीलनेनापि परिपुष्यति। अस्य व्यावहारिकी उपादेयता तु स्वयंसिद्धैव। आधुनिकेस्मिन् समयेप्यस्माभिः स्वकीयाः श्रेष्ठाः परम्पराः सर्वथा परिपालनीयाः। पाश्चात्यानुकरणं पाश्चात्यानामन्धानुकरणं विधाय निरर्थकानि नामानि न धारणीयानि अपितु सार्थकानि नामानि धारणीयानि। इति।

---

1. रघु.
2. रघु.
3. राघु.
4. कु.

ISSN - 0974-8946
अप्रैल-जून, 2019

शोधप्रभा
वर्षः 44, द्वितीयोऽङ्कः

# अतिदेशसूत्रविमर्शः

डॉ. रामनारायणद्विवेदी*

सकलव्यवहारहेतुभूतशब्दनिष्पत्तये भगवान् पाणिनिरष्टाध्यायीं व्यरचत्, तत्र चोत्सर्गापवाद-प्रक्रियामाश्रित्य समेऽपि शब्दाः साधिताः यदि शब्दप्रतिपत्तये प्रतिपदं पाठः क्रियते तदा "बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रं कालो नान्तं जगाम किं पूनरद्यत्वे यः पूर्णं जीवति सः वर्षशतं जीवति"[2] इति भाष्यरीत्या शब्दप्रतिपत्तिः खपुष्पायितमेव भवेदतः परमकारुणिको भगवान् पाणिनिः वैदिकलौकिकोभयशब्दसाधकं किमप्यपूर्वं शब्दशास्त्रं प्रणिनाय। यत्रोत्सर्गापवादप्रक्रियामाश्रित्य भूयांसोऽपि शब्दाः लघुनोपायेनैव बोध्यन्ते। व्याकरणशास्त्रं च पाणिनीयं सूत्रात्मकमेव प्राञ्चो महर्षयः सूत्रात्मकशैल्यैव व्याकरणन्यायमीमांसादिशास्त्राणि रचयाम्बभूवुः। पाणिनीयाष्टाध्याय्यामपि अष्टावध्यायाः विद्यन्ते प्रत्यध्यायं च चत्वारः पादा विलसन्ति। व्याकरणस्यास्य लाघवं वैज्ञानिकत्वं चाकलय्य न केवलं भारतीया अपितु पाश्चात्या वैदेशिका अपि चकितचकिताः सन्तः ग्रन्थममुं मुक्तकण्ठेन प्रशंसन्ति। संस्कृतभाषाया एव एतद्वैशिष्ट्यमस्ति यत् सहस्रवर्षेभ्यः प्राक् या भाषा येन प्रकारेण भाष्यते स्म तेनैव प्रकारेण तां भाषां वयमिदानीं व्यवहारपथमानयामः। इदं च श्रेयः संस्कृतभाषाया एव नान्यस्याः कस्याश्चन भाषायाः। प्रकृतमनुसरामः। अल्पाक्षरत्वे सति सकलार्थबोधकं सारभूतं यत्तत्सूत्रमित्युच्यते।

उक्तमपि–

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥[3] इति**

अमुमेवार्थं वाचस्पतिरप्याह शब्दैरपि–

**लघूनि सूचितार्थानि स्वल्पाक्षरप्रदानि च।**
**सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥[4]**

---

1. एसोशिएट प्रोफेसर, व्याकरणविभागः, काशीहिन्दूविश्वविद्यालयः, वाराणसी।
2. मा.भाष्यम्, पस्पशाह्निकम्
3. म.भा. (कीलहार्नसंस्करण) भाग-1 पृ. 6
4. ब्रह्मसूत्रभाष्ये, वाचस्पतिमिश्रः 1/1/1

अतः सूत्राणि स्वल्पाक्षरवन्त्यपि विश्वतोमुखानि विस्तृतार्थप्रतिपादकानि भवन्ति। सूत्राणीमानि संज्ञापरिभाषाविधिनियमातिदेशाधिकारभेदेन षड्विधानि सन्ति। उक्तमपि–

**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥**

कस्यचिदपि पदार्थस्य व्यवहारविषयता संज्ञामन्तरा भवितुं नार्हति शास्त्रेऽपि शास्त्रीयव्यवहाराय भूयस्यः संज्ञाः विहिता विद्यन्ते। सति सम्भवे टिघुभादयः लहव्यः क्वचिच्च् यौगिकार्थमादाय अव्ययादिसंज्ञाः क्वचिच्च श्रुतिमृत्यादिषूक्तत्वात् धातुप्रातिपदिकादिसंज्ञाश्च कृताः विद्यन्ते।

तथापि यथासंभवं लघीयसी एव सरणिरासृताऽऽस्ते "संज्ञा च नाम यतो न लघीयः" इत्याद्युक्तेः। अतः विध्येकवाक्यतयैव। अतः स्वीयदेशे लक्ष्यसंस्कारोपयोगिवाक्यार्थबोधजनकत्वे सति विधिशास्त्रैकवाक्यतया महावाक्यार्थबोधजनकत्वमेव परिभाषाणां भवति। आह च पतञ्जलिः "परिभाषा पुनरेकदेशस्था सती सर्वं शास्त्रमभिज्वलयति।" अधिकारसूत्राण्यपि विध्युपकारकाण्येव, इमानि च त्रेधा विभक्तानि यथोक्तं महाभाष्ये– "कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वालयति। अपरोऽधिकारो यथा रज्ज्वायसा वा बद्धः काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेण अपरोऽधिकारः प्रतियोगं तस्यानिर्देशार्थमिति योगे योग उपतिष्ठते" इति एभिश्च भाष्यवचनैः स्पष्टमधिकारस्वरूपम्। उत्तरोत्तरसूत्रसम्बन्धत्वं यस्य तस्यैवाधिकारत्वमिति सामान्यतो वक्तुं शक्यते।

विधिशास्त्ररस्य तु अपूर्वविधायकत्वेनैव विधित्वम्। यथा "इको यणचि"[1] इति शास्त्रमचि सति इकः स्थाने यणं विधत्ते, अचीति लिङ्गमाश्रित्य "तस्मिन्निति निर्दिष्टे पूर्वस्य"[2] इति शास्त्रमत्र अव्यवहितत्त्वं पूर्वत्वं चोपस्थापयति तथा सति "अजव्यवहितपूर्वत्वविशिष्टस्येकः यणिति" वाक्यार्थबोधो जायते। अतः अपूर्वविधायकत्वं विधेः सुस्थमेव। नियमशास्त्रं तु नियमयति तथा वाक्यस्य रामो गच्छतीत्यादेः "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्"[3] इति प्राप्ता समाससंज्ञा "कृत्तद्धितसमासाश्च"[4] इत्यनेन नियम्यते तथा च नियमो भवति "यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव"[5] इति। वस्तुतः वाक्यस्फोटस्यैव प्राधान्येन तदितरस्य सर्वस्यापि बुद्धिपरिकल्पितत्वमेव यथोक्तं श्रीमता भर्तृहरिणा–

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।**
**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥**[6]

अतः पदानां वाक्यानां वर्णानां वाऽखण्डत्वमेवाङ्गीकर्तव्यम्। शब्दानां पदानां वाक्यानां वा कार्यत्वपक्षे नित्यत्वपक्षे वा बुद्धिपरिकल्पितमपेक्षितमेव। लोकेऽपि "गुरुवत् गुरुपुत्रे वर्तितव्यम्"

---

1. अष्टाध्यायी 6/91/77
2. अष्टाध्यायी 6/1/66
3. अष्टाध्यायी 1/2/45
4. अष्टाध्यायी 1/2/46
5. सिद्धान्तकौमुदी, अजन्तपुलिङ्गप्रकरणम्
6. वा.प.ब्र.का.–63

"द्विर्वचनेऽचि"[11] "असंयोगाल्लिट् कित्"[2] इत्यादौ वतेरदर्शनात् वत्यर्थघटितत्वमतिदेशत्वमिति केचित्। अपरे तु आरोपबुद्धिप्रयोजकत्वमित्येव ब्रुवते, ते आरोपस्य तद्भूतत्वाभावेऽपि क्षतिविरहः, यतो हि आहार्यत्वबाधसमकालिकेच्छाजन्यज्ञानत्वरूपस्वीकारात्। अत एव व्याकरणशास्त्रे देवदत्तहन्तृहतन्यायः प्रवर्तते। बौद्धार्थमस्वीकृत्य वस्तुसत्तारूपार्थे स्वीकृते तु न्यायावसरो नैव सम्भवेत्। अतिदेशस्य चायं स्वभावो यत् "यन्निमित्तवैकल्यप्रयुक्तोपदेशोऽप्रवृत्तौ अतिदेशो मृग्यते तस्यैवातिदेशत्वमिति। तथा च अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावस्यैव अतिदेशत्वमुच्यते। तथा चायमतिदेशः सप्तविधो भवति, यथोक्तम्–

**कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिताः।**
**व्यपदेशश्च सप्तैतानतिदेशान् प्रचक्षते॥[3]**

एतेषां चोदाहरणानि क्रमशो यथा–

सामान्यातिदेशः – गुरुवत् गुरुपुत्रे वर्तितव्यम्

रूपातिदेशः – तृज्वत्क्रोष्टुः[4]

निमित्तातिदेशः – पूर्ववत्सनः[5]

व्यपदेशातिदेशः – आद्यन्तवदेकस्मिन्[6]

शास्त्रातिदेशः – कर्मवत्कर्मणा तुल्यक्रियः[7]

तादात्म्यातिदेशः – सुबामन्त्रिते पराङ्गवत्स्वरे[8]

कार्यातिदेशः – स्थानिवदादेशोऽनल्विधौ[9]

मीमांसासकशिरोमणिना शबरस्वामिनापि प्रतिपादितम्–

**प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु।**
**धर्मोपदेशो येन स्यात् सोऽतिदेश इति स्मृतः॥[10]**

अष्टाध्याय्यां बहूनि अतिदेशसूत्राणि विद्यन्ते तेषां च स्वीयं स्वीयं महत्त्वमपि विद्यते वतिघटितत्वमतिदेश इति सामान्यलक्षणं वस्तुतस्तु यत्र आरोपः क्रियते तत्र सर्वत्रापि अतिदेशत्वमेव बोध्यम्। शास्त्रीयप्रक्रियानिर्वाहाय अतिदेशकल्पनायाः अत्यावश्यकत्वं भवति। यथा वाक्यस्फोटस्यैव मुख्यत्वेऽपि अष्टौ स्फोटाः प्रकल्पिताः। अत एवाह नागेशः "तत्र वाक्यस्फोटो मुख्यः, तस्यैव

1. अष्टाध्यायी 1/1/49
2. अष्टाध्यायी 1/2/5
3. वै.सि., बालमनोरमाटीका
4. अष्टाध्यायी 1/1/35
5. अष्टाध्यायी 1/3/62
6. अष्टाध्यायी 1/1/21
7. अष्टाध्यायी 3/1/87
8. अष्टाध्यायी 2/1/2
9. अष्टाध्यायी 1/1/56
10. शाबरभाष्यम्

लोकेऽर्थवत्त्वात् तेनैवार्थसमाप्तेश्च"[1] तथा चावापोद्वापाभ्यां वाक्ये पदकल्पना, पदेषु च प्रकृतिप्रत्ययादिकल्पना सर्वमपि बुद्धिपरिकल्पितमेव। प्रकृतमनुसरामः शास्त्रेष्वतिदेशो नाम व्याकरणद्वारा यानि लक्ष्याणि सिद्धीक्रियन्ते, तेषां साधनाय बौद्धपरिकल्पनं विधाय शब्दाः साध्यन्ते। यथा रामाय इत्यत्र यकारे "स्थानिवदादेशोऽनल्विधौ"[2] इति शास्त्रेण स्थानिवृत्तिसुप्त्वमतिदिश्यते, अर्थात् सुप्त्वस्यारोपणमिति भावः। लोकेऽपि शिष्यः गुरुस्थानापन्नः याज्यकुलानि गत्वा अग्रासनादीनि लभते, अतः तत्स्थानापन्नः तद्धर्मं लभते इति रीत्या यस्य स्थाने यः सः तद्धर्मवान् भवति। अयं च न्यायः इत्युच्यते, लोकव्यवहारेण सिद्धोऽर्थः न्याय इत्युच्यते। न्यायस्य चास्य शास्त्रेऽपि प्रचारो भवति। गुरुणा प्रेषितः शिष्यः यदा याज्यकुलानि याति तदा गुरुरिव मानभाक् भवति। तेन यस्य स्थाने यो भवति सः तत्तुल्यो भवतीति विज्ञायते। किञ्च व्याकरणे वर्तते शासनम् "स्वं रूपं शब्दस्याशब्दसंज्ञा"[3] इति शब्दः स्वकीयामानुपूर्वीमेव बोधयतीति तत्तात्पर्यम्। अत्र स्थानीभिन्नः आदेशश्च भिन्नः द्वयोः वैरूप्यात् आदेशः स्थानिरूपो तद्धर्मवान् वा भवितुं नार्हति। यथा अग्रासनादीनि लभ्यन्ते शिष्येण तथापि उच्छिष्टभोजनं शिष्यस्य नैव भवति। अतः अतिदेशसूत्राणामिदं वैशिष्ट्यं यत् स्थानिनिष्ठधर्माणामादेशेप्यारोपं विधाय तन्निमित्तकं कार्यं सम्पाद्यते। उक्तं च वासुदेवदीक्षितेन "गुरुस्थानापन्ने गुरुपुत्रादौ स्थानापत्या तद्धर्मलाभो लोकतः सिद्धः। तथा च कुशादिस्थानापन्नेषु शरादिषु वैदिकन्यायसिद्धः"[4]। वैशिष्ट्यान्तरमतिदेशस्य यथा "तृज्वत् क्रोष्टुः"[5] इत्यतिदेशसूत्रम्, अनेन तृज्वद्भावो विधीयत अतोऽत्र रूपातिदेशः। अत्र मूलशब्दमपरिवर्त्यैव केवलं तृजन्तभावो विहितः तेन "क्रोष्टृ" इत्यस्य स्थाने "क्रोष्टृ" इति व्यवहारो भवति।

वतिघटितसूत्राण्यपि किंचन वैशिष्ट्यमादधति, वतिप्रत्ययस्य सादृश्यबोधकत्वं "तेन तुल्यं क्रिया चेद्वतिः"[6] "तत्र तस्येव"[7] इति सूत्राभ्यां प्रतिपाद्यते। अत्र प्रथमसूत्रस्य "तृतीयान्तात् तुल्येऽर्थे वतिप्रत्ययो भवति यत्तुल्यं सा क्रिया चेत्" इत्यर्थः यथा– ब्राह्मणवदधीते क्षत्रियः, राजवद् वर्तते वैश्यः, शूद्रवदाचरति ब्राह्मणः इत्यादीन्युदाहरणानि, अत्र ब्राह्मणादिपदैः लक्षणावृत्या तद्गताध्ययनादिक्रिया बोध्यते। एवं च ब्राह्मणकर्तृकाध्ययनसदृशी क्षत्रियकर्तृका अध्ययनक्रिया इति बोधो जायते। अत्र व्यक्तिसादृश्यमपि क्रियाद्वारकमेव। अतः "तेन तुल्यं क्रिया चेद्वतिः"[8] इत्यत्र तेनेतिपदे तृतीया तुलोपमाशब्दवर्जं तुल्यार्थकशब्दैः योगे तृतीया वा स्यात् एतदर्थकेन "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्"[9] इति शास्त्रेण विहिता। सा च शेषषष्ठ्याः अपवादभूता इति सर्वविभक्त्यर्थबोधिकापि विद्यते। अत एव च "राज्ञा सदृशं वर्तते, राजवत् वर्तते, जडस्य तुल्यं ब्रूते जडवत् ब्रूते, सूर्य इव प्रकाशते, सूर्यवत्

1. परमलघुमंजुषा, शक्तिप्रकरणम्
2. अष्टाध्यायी 1/1/56
3. अष्टाध्यायी 1/1/68
4. सि.कौ., बालमनोरमाटीका
5. अष्टाध्यायी 7/1/95
6. अष्टाध्यायी 5/1/115
7. अष्टाध्यायी 5/1/116
8. अष्टाध्यायी 5/1/115
9. अष्टाध्यायी 2/3/72

प्रकाशते, पिता इव पालयति पितृवत् पालयति, राजा इव राजवत् व्यवहृतमनेन, देवमिव देववत्, पर्वतादिव पर्वतवत् आसनादवरोहति" इत्यादिस्थले वतिप्रत्ययान्तघटिते तृतीयाभिन्नविभक्तयर्थस्यापि प्रवृत्तिर्जायते। अत एव सनः पूर्वस्माद् धातोरिव सन्नन्तादपि आत्मनेपदं भवतीत्यर्थे "पूर्ववत्सनः"[1] इति सूत्रमाचार्येण निरमायि। "तेन तुल्यं क्रिया चेद्वतिः" इत्यनेन यः वतिप्रत्ययो विधीयते तत्र सूत्रानुरोधेन तृतीयान्तेनैव विग्रहो भवति। अर्थस्तु उपमेयविभक्त्यनुसारमेव स्वीक्रियते। अतः उपमानोपमेययोः समानविभक्तिकत्वनियमस्य भङ्गोऽपि विहितो न भविष्यति। गदाधरभट्टाचार्योणापि समानविभक्तिकत्वनियमं प्रतिपादयता प्रोक्तं यत्– "स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना च पदेन उपस्थापितस्यैव संसर्गमर्यादया भासते"[2] यथा नीलो घटः इति तेनोक्तम्। इत्थमेव "पूर्ववत्सनः"[3] इत्यत्र कैयट आह "पक्षद्वयेऽपि तेन तुल्यमिति तृतीयान्ताद्वतिः, न तु पञ्चम्यन्तात्" अयं भावः पक्षयोरनयोः "तेन तुल्यम्" इत्यस्य तृतीयान्ताद् वतिप्रत्ययो भवति, किन्तु पञ्चमयन्ततायाः ग्रहणं नैव विहितम्। इत्थं सूत्रेणानेन कृता तृतीया सर्वविभक्त्यर्थान् अन्तर्भावयति, अतो पञ्चम्यर्थग्रहणमत्रायुक्तमेव। यथा ब्राह्मणवद् वैश्यादधीते, अत्र ब्राह्मणादिव वैश्यादधीत इत्यर्थः। वैशायापादानकस्याध्ययनस्य ब्राह्मणापादानकमध्ययनमुपमानं विद्यते। ब्राह्मणापादनकाध्ययने तत्र ब्राह्मणशब्दो विद्यते। तेन ब्राह्मणेन तुल्यं वैश्यादधीत इति तृतीयान्तात् वतिप्रत्ययोऽत्र जातः। एवमत्रापि बोध्यम्। स्थानिवत्सूत्रे च तेन तुल्यमित्यादिसूत्रेण वतिः, एवं च अलाश्रयभिन्ने विषये स्थानिना तुल्यं स्यादिति सूत्रार्थः। आदेशे च स्थानिकार्यप्राप्त्यैव सादृश्यं सम्भवति स्थानितुल्यव्यवहारेण, तद्गतधर्मव्यवहारेण वा। अतिदेशस्य चेदमेवापूर्वं कार्यम्। इत्थं चातिदेशविधायकसूत्राणां वैशिष्ट्यं बहुत्र द्रष्टुं शक्यम्। तत्र तस्येव इत्यस्य सप्तम्यन्तात् तत्रैव षष्ठ्यन्ताच्च वतिप्रत्ययो भवत्वित्यर्थः संजायते। "तेन तुल्यं क्रिया चेद्वतिः" इति सूत्रेण यत्र तृतीयाविभक्त्या सर्वविभक्त्यर्थस्य अवगमो भवति तत्र षष्ठीसप्तम्यर्थस्य ग्रहणं भवति। एवमपि तत्र क्रियातौल्य एव वतिप्रत्ययो विहितो विद्यते। तथा च प्रयोगो लोकेऽपि यथा– पुत्रेण तुल्यः स्थूलः देवदत्तः, भ्राता तुल्यो धनी देवदतः इत्यादिनिदर्शनेषु द्रव्यगुणतौल्ये माभूत्। अतः गुणस्य द्रव्यस्य तौल्येऽपि वतिप्रत्यये शास्त्रमिदम् कानिचनात्र निदर्शनानि। "मथुरावत् स्नुग्धे प्राकारः, बृहस्पतिपदेभ्यः लक्षणया मथुराप्राकाराद्यर्थप्रतिपादकेभ्य उपमानवाचकेभ्यः सप्तमीविभक्त्यन्तेभ्यः इवार्थे वतिप्रत्ययो भवति। उपमेयस्नुघ्नसम्बन्धी प्राकार इत्यादिबोधो जायते।

"चैत्रवत् मैत्रस्य गावः, मन्मथवदस्य सौन्दर्यम्" इत्यादिषु स्थलेषु चैत्रादिपदात् इवार्थको वतिप्रत्ययो बोध्यः। तत्र बोधश्च चैत्रसम्बन्धिगावः इत्यादिरूपः। शब्दशास्त्रेऽपि "स्यसिच्सीयुट्तासिषु भावकर्मणोः उपदेशऽज्झनग्रहदृशां वा चिण्वदिद् च"[4] इत्यत्र स्यसिच्सीयुत्टासिपदे उपमेयबोधके सप्तम्याः सत्वेन उपमानबोधकात् सप्तम्यन्तात् चिणशब्दादपि सप्तमीविभक्त्यन्तादेव वतिप्रत्ययः।

1. अष्टाध्यायी 1/3/62
2. व्युत्पत्तिवादः, अभेदप्रकरणाम्
3. अष्टाध्यायी 1/1/62
4. अष्टाध्यायी 6/4/62

अपि च शब्दशास्त्रस्य यत्किञ्चित्कार्यविधायकत्वात् द्रव्यगुणकर्मबोधकशब्देभ्यः सादृश्यस्य प्रतिपिपादयिषायामेव वतेः विधीयमानत्वात् कार्यमिति शब्दस्य व्यपदेशो विहितः। सूत्रमिदं, मथुरावत् स्रुघ्ने प्राकार इतिवत् वाक्यार्थं गमयति। उपदेशावस्थायामजन्ततया विद्यमानानां भू हन् इत्यादीनां वृद्ध्यादिकार्याणि भवन्तीति विज्ञाय चिण्स्यसिच्सीच्सीयुट्तासीनां वृद्ध्यादिकार्यजनकत्वेन सादृश्यं प्रतिपाद्यते। "सन्वल्लघुनिचङ्परेऽनग्लोपे"[1] "आद्यन्तवदेकस्मिन्"[2] इत्यादिस्थलेष्वपि अयमेव पन्था आलम्बनीयो भवति। "लोटो लङ्वत"[3] सूत्रेऽस्मिन्नपि उपमेयवाचकशब्दे षष्ठ्याः दर्शनात् षष्ठ्यन्तलङ्शब्दादेव वतिः बोध्यः। अत्रापि कार्यमिति पदमध्याहारलभ्यम्। इह लोट्पदस्य लक्षणावृत्तिमाश्रित्य तत्सम्बन्धिबोधकत्वम्। अत्रापि मैत्रवत् गाव एतत्सदृश एव बोधः। सामान्यत उच्यमाने इदमापतति यत् सर्वत्र अतिदेशस्थले यदि तृतीयान्तातिः तर्हि तत्स्थानिककार्याणि, तन्निमित्तककार्याणि चातिदिश्यन्ते। यथा– काभ्याम् रामाभ्यामित्यादि। यत्र च वतिः षष्ठ्यन्तविहितोऽस्ति, तंत्र स्वस्यैव यदागमादेशादिकार्यं तदेवातिदिश्यते, यथा लोटो लङ्वदित्यादि। इत्थमतिदेशविषये भूयांसि वैशिष्ट्यानि विद्यन्ते। किञ्चिन्निदर्शनमत्र प्रस्तुतम्।

---

1. अष्टाध्यायी 7/4/93
2. अष्टाध्यायी 3/4/85
3. अष्टाध्यायी 1/1/21

ISSN - 0974-8946
अप्रैल-जून, 2019

शोधप्रभा
वर्षः 44, द्वितीयोऽङ्कः

# ब्रह्मणः स्वरूपलक्षणविचारः

डॉ. जवाहरलालः

धर्मार्थकाममोक्षेषु चतुर्विधपुरुषार्थेषु मोक्षस्य परमपुरुषार्थत्वम् इत्यस्ति वेदान्तदर्शनस्याभिमतम्। तत्र मोक्षस्य कथं परमपुरुषार्थत्वमित्यत्र उच्यते - अनर्थहेतुभूताविद्यायाः निवृत्तिरूपत्वात् आत्मनः स्वरूपावाप्तिरूपत्वाच्च मोक्षस्य एव परमपुरुषार्थत्वमिति। स च मोक्षः आत्मभावरूपः, आत्मज्ञानादेव लभ्यः। **तरतिशोकमात्मवित्, ब्रह्मविद्ब्रह्मैवभवति** इति। **कर्मणा पितृलोकः विद्यया देवलोकः।**

**विद्यां चाविद्यां च यस्तद्वेदोभयं सह।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते।।[1] इति।**

कर्मोपासनानां मोक्षभिन्नस्वर्गाद्यनित्यफलदर्शनात् ब्रह्मज्ञानस्य च संसार निवृत्तिरूपमोक्षफलश्रवणात्। तथाहि उच्यते-

**ब्रह्मात्मैकत्वविज्ञानात् मिथ्याज्ञानं निवर्तते।**
**आत्मानात्मविवेकोऽसौ बन्धोऽनादिः प्रवर्तते।।**

ब्रह्मात्मैकत्वविज्ञानेन मिथ्याज्ञानरूपसंसारस्य निवृत्तिः भवति, अविद्यानिवृत्तौ च ब्रह्मस्वरूपावाप्तिः भवतीति अस्ति आचार्याणां पक्षः। उपनिषत्सु ब्रह्मणः स्वरूपविषयकाणि बहूनि वाक्यानि दृश्यन्ते। यथा बृहदारण्यके **'सत्यस्य सत्यम्'**, **'विज्ञानमानन्दं ब्रह्म'**, तैत्तिरीये च **'सत्यं ज्ञानमनन्तं ब्रह्म'** इति। अत्र जिज्ञासा भवति यत् तस्य ब्रह्मणः स्वरूपं किम्? किं च तत् प्रमाणम् इति?

तत्र ब्रह्मसूत्रे भगवता वादरायणेन आदौ अध्यासभाष्ये जगतः मिथ्यात्वं प्रतिपाद्य **'अथातो ब्रह्मजिज्ञासा'** इत्यनेन सूत्रेण ब्रह्मजिज्ञासायाः प्रतिज्ञा कृता। तत्र जिज्ञासितस्य ब्रह्मणः लक्षणं किमिति जिज्ञासायां **'जन्माद्यस्य यतः'** इति सूत्रेण जिज्ञासितस्य ब्रह्मणः लक्षणं प्रतिपादितम्। तत्र भगवता भाष्यकारेण आचार्यशंकरेण भाष्ये लक्षणद्वयम् उपस्थापितं तटस्थलक्षणं स्वरूपलक्षणं च। प्रकृतं जन्माद्यस्य यतः इति सूत्रेण तटस्थलक्षणमुक्तम्। **'कादाचित्कत्वे सति व्यावर्तकं तटस्थलक्षणम्।'** यथा **'काकवन्तो देवदत्तस्य गृहाः'**। अथ च तटस्थलक्षणप्रतिपादिका श्रुतिश्च वर्तते **यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत्प्रयन्ति अभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति।** अपरं च स्वरूपलक्षणं **सच्चिदानन्दस्वरूपमिति।** तच्च स्वरूपं अविद्यानिवृत्तिं विना न

* सहाचार्यः, सर्वदर्शनविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-16

1. ईशावास्योपनिषद् 7

संभवति। तत्र स्वरूपलक्षणं नाम **स्वरूपमेव लक्षणं स्वरूपलक्षणम्।**[1] अत्र स्वरूपलक्षणस्य यल्लक्षणं तत्र स्वरूपमेवेति पदं प्रयुक्तं न तु स्वरूपस्येति। अतः तात्विकं स्वरूपमेव बोध्यते। यथा प्रकाशादिना दीपस्य स्वरूपं लक्ष्यते। ब्रह्मणः स्वरूपलक्षणं किमिति जिज्ञासायामत्र ब्रह्मविदाप्नोति परमिति श्रुतिवाक्येन ब्रह्मज्ञानस्य अविद्यानिवृत्तिरूपं प्रयोजनमुपस्थाप्य तस्य ब्रह्मणः लक्षणमुक्तं–**'सत्यं ज्ञानमनन्तं ब्रह्म'**[2], **'सत्यं ज्ञानमानन्दं ब्रह्म'**, **'विज्ञानमानन्दं ब्रह्म'** इति। अत्र सत्यं ज्ञानमनन्तं ब्रह्म इति ब्रह्मणः स्वरूपलक्षणम्। अस्मिन् वाक्ये ब्रह्म इति लक्ष्यं विशेष्यं वेति। अवशिष्टानि सत्यादीनि पदानि लक्षणभूतानि विशेषणानि। यानि च इतरव्यावर्तकतया ब्रह्मणः स्वरूपं साधयन्ति। स्वरूपे सति व्यावर्तकं स्वरूपलक्षणम्। सत्यं ज्ञानमनन्तम्, सत्यं ज्ञानमानन्दं वेत्यत्र लक्षणवाक्ये पदत्रयं सत्यं, ज्ञानं, अनन्तं वर्तते किमेतत्त्रयं मिलित्वा ब्रह्म बोधयन्ति उत एकैकश इति जिज्ञासायां सिद्धान्तबिन्दुकारः वदति एतत् त्रयं मिलित्वा एव ब्रह्म स्वरूपं बोधयन्ति। परन्तु वेदान्तपरिभाषाकारः वदति एषु एकैकमपि पदं ब्रह्मबोधने सामर्थ्यं धारयति। एषु एकैकमपि विशेषणं ब्रह्मणा सम्बद्धं वर्तत इति।

अत्र नीलोघटः इत्यादिवाक्येषु यथा नीलघटपदयोः विशेषणविशेष्यभावसंबंधः भवति तथा अस्मिन् लक्षणवाक्ये विशेषणविशेष्यभावसंबंधः नास्तीति। विशेषणवाक्यस्य सजातीयव्यावर्तकत्वात्, लक्षणवाक्यस्य च सजातीयविजातीयव्यावर्तकत्वादिति। सत्यं ज्ञानमनन्तं ब्रह्म इत्यत्र लक्षणवाक्ये विशेषणत्रयं वर्तते– सत्यं ज्ञानं अनन्तं चेति।

**सत्यम्**– अबाधितं, त्रैलोक्याबाध्यत्वं सत्यत्वमिति। तच्च ब्रह्मणि एव संगच्छते। आचार्यशङ्करेण तत्त्वबोधे सत्यस्य लक्षणं कृतम्–**'कालत्रयोऽपि तिष्ठतीति सत्'।**[3] यद्वस्तु त्रिषुकालेषु अव्यभिचरितं तिष्ठति तत् सत्। ब्रह्म तादृशं वस्तु विद्यते। ब्रह्मणः देशकालवस्तुत्रिविधपरिच्छेदरहितत्वात्। यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरतीति तत् सत्यम्। यद्रूपेण यन्निश्चितं तद्रूपं व्यभिचरत्यनृतम्। यथा रज्जौ सर्पज्ञाननिश्चये जाते कालान्तरे बाधज्ञानकाले सर्परूपत्वं त्यजति। अतः अत्र व्यभिचारः। रज्जौ सर्पज्ञानस्य नाशः भवति। रज्जौ रज्जुत्वनाशः न भवतीति। अतः सत्यं ब्रह्म विकारश्चानृतम्। **वाचारम्भणं विकारो नामधेयम्, मृत्तिकेत्येव सत्यमिति** अस्ति दृष्टान्तः। अनेन ब्रह्म सत्यत्वेन ज्ञाते सति न सत्यत्वं व्यभिचरति। श्रीमद्भगवद्गीतायां **नासतो विद्यते भावो नाभावो विद्यते** सतः अस्य व्याख्याने आचार्यशंकरः वदति **यद्विषया बुद्धिर्न व्यभिचरति तत् सत्।**[4] अर्थात् त्रिषु कालेषु एकरूपतया विद्यते तत् सत्। उपनिषत्सु सदिति शब्दस्य कृते सत्यशब्दस्य प्रयोगो दृश्यते। सत्यत्वं बाधराहित्यमिति। अत्र सत्यविशेषणेन विकारभिन्नत्वं बोधितं भवति।

पुनश्च ज्ञानमिति विशेषणं ज्ञप्तिवाचकम्। सच्चिदानन्द इत्यत्र चिद्रूपं चिच्छब्दः चिति संज्ञाने इति धातोः निष्पन्नः ज्ञानवाचकः। वदति च भाष्यकारः तत्त्वबोधे चित् किम्? **ज्ञानस्वरूपकमिति।**[5]

1. वेदान्तपरिभाषा विषयपरिच्छेद 2-299
2. तैत्तिरीयउपनिषद् 2-1-10
3. तत्त्वबोधः पृ. 27
4. शांकरभाष्यम् गीता 2
5. तत्त्वबोधः पृ. 27

ब्रह्म चित् स्वरूपं इत्यनेन ज्ञानरूपत्वप्रतिपादने तात्पर्यं वर्तते। उपनिषत्स्वपि चित् स्थाने ज्ञानविज्ञानादिपदानां प्रयोगः दृश्यते। सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्मेति।

**बुद्धिविज्ञानसम्पृक्तश्चन्द्रसम्पृक्तराहुवत्।**
**प्रमीयते ततः प्रत्यक् विज्ञानमय उच्यते।।**

अतः अत्र ज्ञानमिति पदं ज्ञप्तिबोधकं न तु ज्ञानवत् बोधकं न वा ज्ञानकर्तृत्वबोधकम्। तत्र हेतुः वर्तते सत्यानन्तसहचर्यादिति। सत्यं ज्ञानमनन्तं ब्रह्म इत्यत्र ज्ञानेति पदस्य सत्यानन्तपदाभ्यां सह साहचर्यं वर्तते। ज्ञानशब्दः ज्ञानकर्तृत्वबोधक इति स्वीक्रियते चेत् तत्र सत्यत्वं न संभवति। ज्ञानस्य क्रियारूपत्वात्। अर्थात् ज्ञानमिति पदस्य ज्ञानस्य कर्ता अर्थः स्वीक्रियते चेत् ज्ञानं क्रियारूपं भविष्यति। ज्ञानस्य च क्रियारूपत्वे सति क्रियायाश्च कर्तृनिष्ठत्वात् तस्य सत्यत्वेन सह साहचर्यं नैव भवितुमर्हति। नापि क्रियायाः सान्तत्वात् अनन्तेन सह साहचर्यं संभवति। अतः ज्ञानं न ज्ञानवतो बोधकः अपितु ज्ञप्तिबोधक एव। ब्रह्म च न ज्ञानस्य कर्ता, तस्य ज्ञानरूपत्वात् वदति च श्रुतिः – **प्रज्ञानं ब्रह्मेति।**

घटपटादिनां ज्ञानं च लोके सान्तं प्रसिद्धम्। सान्तत्वाच्च ज्ञानस्य ज्ञनस्वरूपस्य ब्रह्मणः अपि सान्तत्वमापद्यते। अतः लौकिकज्ञानात् व्यावृत्त्यर्थमेव अत्र ब्रह्मलक्षणवाक्ये अनन्त इति पदं प्रयुक्तम्। अनेन लौकिकज्ञानस्य सान्तत्वेपि तस्य प्रसक्तिः ब्रह्मणि नास्ति। ज्ञानरूपस्य ब्रह्मणः अनन्तत्वमेवेति। सिद्धम्। अनन्तेति पदेन ब्रह्मणः अनन्तत्वं बोध्यते। न अन्तः नाशः यस्य इति। नित्यमित्यर्थः। अस्मिन् विषये चूडामणौ उक्तं आचार्यशङ्करेण **यद्ब्रह्म सदद्वितीयं शुद्धविज्ञानघनशान्तनित्यादिगुणयुक्तमिति।**[1]

**अतः परब्रह्म सदद्वितीयं विशुद्धविज्ञानघनंनिरञ्जनम्।**
**प्रशान्तमाद्यन्तविहीनमक्रियं निरन्तरानन्दरसस्वरूपम्।।**
**अपि च ज्ञातृज्ञानज्ञेयशून्यमनन्तं निर्विकल्पकम्।**
**केवलाखण्डचिन्मात्रं परं तत्त्वं विदुर्बुधाः।।**

अत्र सत्यं ज्ञानमनन्तमिति पदानि असत्यमज्ञानं सान्तमित्यर्थनिवर्तकत्वेन विशेषणमिति स्वीकारे ब्रह्मणि लक्षणशून्यत्वं सिद्ध्यति। लक्षणशून्यत्वाच्च बन्ध्यापुत्रवदलीकत्वप्रसक्तिरिति न वक्तव्यम्, यतो हि सत्यादिपदानि साक्षाद् ब्रह्मणः अखण्डार्थत्वमेव लक्षयन्ति। अर्थात् लक्षणवाक्ये प्रयुक्तानां सत्यादिपदानामखण्डार्थबोधने एव तात्पर्यमिति। न तु सत्यादिपदानि असत्याद्यर्थनिवर्तकानि। असत्याद्यर्थानां निवृत्तिस्तु स्वत एव संगच्छते। यथा सास्नादिमत्वं गोः लक्षणमित्यत्र गोः स्वरूपनिश्चये जाते महिषादिषु सास्नादिमद्रहितत्वानां स्वत एव व्यावृत्तिः भवति।

पुनश्च **असाधारणधर्मो लक्षणमिति**[2] लक्षणस्य लक्षणं सूचितं वर्तते। तत्र प्रकृते ब्रह्म तावत् निर्विशेषः, निर्धर्मकः वर्तते। तत्र कस्यापि धर्मस्य अभावदर्शनात् कथं सत्यादिपदं ब्रह्मलक्षकं नाम

---

1. विवेकचूडामणि
2. तर्कसंग्रहः

ब्रह्मण: लक्षणं भवितुमर्हति। लक्षणस्यासाधारणधर्मरूपत्वात्। तत्र जिज्ञासा भवति यत् किं ब्रह्म अलक्षणं लक्षणरहितमस्ति अथवा सत्यत्वादिधर्मकं सत्यत्वादिर्ब्रह्मण: धर्म: वर्तते। तत्र प्रथम: पक्ष: ब्रह्म अलक्षणमिति न संभवति। ब्रह्म अलक्षणमिति स्वीक्रियते चेत्तस्यालीकत्वापत्ति:। अर्थात् यथा बन्ध्यापुत्र: अस्तित्वरहित: अलीक: भवति तथैव लक्षणरहितत्वे ब्रह्माप्यलीकं भविष्यतीति। द्वितीय: पक्ष: सधर्मकं ब्रह्म इत्यपि न संभवति। सधर्मकं ब्रह्म स्वीक्रियते चेत्तस्य ब्रह्मण: अनित्यत्वापत्तिरिति। समाधीयते उभयोपि पक्ष: न संगत:। यतो हि आरोपितैरेव सत्यत्वादिधर्मै: सत्यादिपदैर्ब्रह्म लक्ष्यते अर्थात् सत्यत्वादिधर्मानारोप्य एव ब्रह्मण: सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणं क्रियते। नत्वभिधानं क्रियते इत्यर्थ:। पुनश्च ब्रह्म सर्वप्रमाणागोचरत्वात् सत्यत्वादिधर्मानारोप्य श्रुत्या एव प्रमाणेन निर्धर्मकं ब्रह्म लक्ष्यते इति। वदति च श्रुति:–

**न तत्र चक्षुर्गच्छति, न वाग्गच्छति, नो मन:, विद्मो न विजानीतो यथैतदनुशिष्याद् अन्यदेव तद् विदिताद् अविदिताद्धि इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे।** अपि च

**यद् वाचा अनभ्युदितं येन वागभ्युपपद्यते।**
**यन्मनसा न मनुते येनाहुर्मनोमतम्।**

इत्यादिश्रुतिभिरिन्द्रिय मनोवाग् अविषयत्वप्रतिपादनात्। तथा च अखण्डं निर्विशेषं ब्रह्म सत्यादिपदेन लक्ष्यते। अन्यत्र सापेक्षिकसत्यत्वादिधर्माणां विद्यमानत्वेपि परमार्थसत्यत्वस्य विद्यमानत्वं तु ब्रह्मणि एव वर्तते। अत: सत्यं ज्ञानमनन्तं ब्रह्म इति वाक्यं ब्रह्मण: स्वरूपलक्षणम्। अत्र त्रैकालाबाध्यत्वं हि सत्यत्वं यदभिहितं तद्ब्रह्मव्यतिरिक्ते अन्यत्र न संभवतीति।

अत्र पुन: जिज्ञासा भवति यत् असाधारणधर्मरूपलक्षणं तु नियमेन सखण्डार्थत्वं बोधयति सत्यत्वादिवाक्यं कथमखण्डं ब्रह्म बोधयेत् इति। तत्र उच्यते यान्यपि स्वरूपबोधकानि वाक्यानि सन्ति तानि सर्वाणि वाक्यानि अखण्डार्थबोधकानि एव। यथा प्रकृष्टप्रकाश: चन्द्र: इति वाक्ये लक्षणवाक्ये चन्द्रस्वरूपमात्र बोधने तात्पर्यम्। मन्दप्रकाशस्य व्यावृत्तिस्तु स्वत एव भवति।

स्वरूपलक्षणवाक्यानां सर्वेषां अखण्डार्थबोधकत्वात् तादृशनियमासिद्धे:। प्रकृष्टप्रकाशश्चन्द्र: इत्यादौ स्वरूपबोधके वाक्ये चन्द्ररूपार्थमात्रबोधकत्वस्य दृष्टत्वात् तत्र मन्दप्रकाशादीनां व्यावृत्तिस्त्वार्थिकी न शाब्दीति। तटस्थ लक्षणस्यतु सखण्डार्थबोधविषयो भवतु। उपनिषत्सु सर्वत्रैव ब्रह्मण: निर्विशेषत्वं सूचितं भवति। यद् यदृश्यमग्राह्यमगोत्रमवर्णमचक्षु: श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्तिधीरा:।।[1]

माण्डूक्योपनिषद्यपि अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यते स आत्मा स विज्ञेय: इति।

---

1. मुण्डकोपनिषत्

ISSN - 0974-8946
अप्रैल-जून 2019

शोधप्रभा
वर्षः 44, द्वितीयाङ्कः

# कौण्डभट्टनागेशभट्टरीत्या आख्यातार्थव्यापारमतनिरासः

डॉ० दीपककुमारकोठारी

प्रतिपादितन्तत्र वैयाकरणभूषणसारनामके ग्रन्थे **'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः'**[1] इत्यनया प्रथमया कारिकया तिङर्थ **'आश्रय'** इति। अत्र च प्रत्यासत्तिन्यायेन फलव्यापारयोर्ग्रहणं कृत्वा फलाश्रयः **'कर्म'** व्यापाराश्रयः **'कर्ते'**तिरीत्या' 'कर्ता' 'कर्म' चाख्यातार्थ इति हि स्वीक्रियते शाब्दिकैः। एतदतिरिच्य 'संख्याकालावपि तिङर्थाविति। सर्वमाहत्य तिङोऽर्थचतुष्टयं सञ्जायते शाब्दिकनये- **'कर्तृकर्मसंख्याकाला'**[2] इति। **अत्रेदमवधेयम्** – अत्राख्यातशब्दस्तिङ्ङित्यस्यैवापरपर्यायः। 'आख्यायते = बोध्यतेऽर्थोऽने-नेत्याख्यातमिति व्युत्पत्त्याख्यातशब्दस्तिङि योगरूढो वर्तते। तिङ्ङित्यस्य च प्रत्ययत्वात् **'प्रत्ययग्रहणे तदन्ता ग्राह्या'** इति न्यायेन तिङन्तपरताप्यस्य (आख्यातस्य) सिध्यति।

अत्र च मीमांसका आख्यातार्थो **भावना**[3] (व्यापारः) वर्तत इति वदन्ति। अस्य च मीमांसकमतस्य खण्डनं स्व-स्वयुक्तिभिराचार्येण तत्र कौण्डभट्टेनाथ च आचार्येण तत्र नागेशभट्टेन स्व-स्वग्रन्थे कृतम्। मीमांसकानाम्मतमिदं खण्डयितुं तत्र वैयाकरणभूषणसाराख्ये ग्रन्थ आचार्येण कौण्डभट्टेन प्रमुखरूपेण युक्तिद्वयं प्रदर्शितम्। इत्थमेवाचार्येण नागेशेनापि स्वकीये परमलघुमञ्जूषाख्ये ग्रन्थे मतमिदं खण्डयितुं अनेकाः युक्तयः संप्रदत्ता वर्तन्ते। अत्र च पूर्वमाचार्यस्य कौण्डभट्टस्य युक्तिद्वयं संप्रदर्श्य, ततश्चाचार्यस्य नागेशस्य विचारे विचारः क्रियते। सम्प्रति च आचार्यकौण्डभट्टानुसारमाख्यातार्थ-व्यापारमतनिरासपरका प्रथमा युक्तिर्विचार्यते- तत्र धात्वर्थः फलमेवाख्यातार्थस्तु भावनेति मन्यमाना मीमांसका इत्युक्तमेव पूर्वम्। मीमांसकानाञ्च मतमिदं खण्डयन् वक्ति तत्र वैयाकरणभूषणसारकारो यद्यदि मीमांसकैराख्यातार्थो भावनेत्येव स्वीक्रियते चेत्तर्हि कृत्प्रत्ययानामपि कर्तृवाचकत्वं, कर्मवाचकत्वञ्च न सेत्स्यति। यतोहि तथा स्वीकारे (आख्यातार्थो भावनेत्येव स्वीकारे) **लः कर्मणि च भावे चाऽकर्मकेभ्य'** सूत्रेऽस्मिन् कर्तृपदं व्यापारपरकं भविष्यति तथा च सति **'कर्तरि कृत्'** सूत्रेऽस्मिन्नपि कर्तृपदं व्यापारपरकमेव भविष्यति यतोहि 'कर्तरि कृत्' इति सूत्रस्थस्यैव 'कर्तरी'ति पदस्यानुवृत्तिः 'लः कर्मणी'ति सूत्रेऽप्यायाति। उभयोस्तुल्ययोगक्षेमो[4] वर्तते। अत्र च 'लः कर्मणी'ति सूत्रे कर्तृपदं व्यापारपरकं वर्तते, तत्र च 'कर्तरि कृदि'ति सूत्रे 'कर्तरी'ति पदं कर्तृपरकं विद्यत एतद् वैषम्यं नैव हि स्वीकर्तुं शक्यमिति।[5] अत आख्यातार्थो न 'भावने'त्येव स्वीकरणीयो मीमांसकैरिति वर्तते प्रथमा रीतिः। **अपरा च युक्तिर्ग्रन्थकारेण या प्रदत्ता सा-**

* सहायकाचार्यो नव्यव्याकरणे (अं०का०), श्रीभगवानदासादर्शसंस्कृतमहाविद्यालयः,पो० – गु०काँ० हरिद्वारम्, पिन – 249404

सम्प्रति च तत्राचार्येण नागेशेन मीमांसकानाम्मतमिदं खण्डयन् या युक्तयः संप्रदर्शितास्ताः प्रदर्श्यन्ते-तत्राचार्यनागेशमतानुसारं यद्याख्यातार्थो व्यापार एव, तर्हि प्रथमो दोषो भवति, **'लः कर्मणि च भावे चाऽकर्मकेभ्यः'** सूत्रेणानेन सह मीमांसकानां विरोधः। **स चेत्थम्**-तत्र लः कर्मणि च भावे चाऽकर्मकेभ्यः' इति सूत्रेण कर्तरि कर्मणि च लकारविधानं क्रियते। एतेन च लकारार्थः (तिबर्थः) 'कर्तृकर्मणी' वर्तेत इति सिध्यत्येव। यदि चात्र मीमांसकास्तिबर्थो व्यापारः (भावना) इत्येव स्वीकुर्वन्ति चेत्तर्हि लः कर्मणीति सूत्रेण सह तेषां विरोधः स्पष्ट एव।[7] एष प्रथमो दोषः। **अपरश्च दोषस्तेन यः प्रदर्शितः सः** - यदि च मीमांसकरीत्या व्यापारः प्रत्ययार्थ इत्येव स्वीक्रियते चेत्तर्हि 'पचति' 'पक्ष्यति' प्रभृतिषु तिङन्तेषु तिप्प्रत्ययार्थो व्यापारो भविष्यति, तथा च सति 'पक्ववान्' प्रभृतिषु कृदन्तेष्वपि क्तवतुप्रभृतिकृत्प्रत्ययानामर्थोऽपि व्यापार एव भविष्यति, अथ च प्रत्ययास्त्वनेकास्तेनानेकेषु प्रत्ययेषु व्यापारवाचत्वं भविष्यतीति स्पष्टमेव। एतद्पेक्षया प्रकृतेः (धातोः) एव व्यापारवाचकत्वे लाघवं वर्तते। प्रकृतिभूतस्य धातोः (पच्धातोः) त्रिष्वपि स्थलेषु समानत्वादिति। अतो व्यापारस्याख्यातवाच्यत्वन्तु गौरवायैव।[8] तेन लाघवानुरोधाद् धातोरेव तद्वाचकत्वं स्वीकरणीयमित्यभिप्राय आचार्यस्य।

**अन्यश्च दोष आचार्येण यः प्रदत्तः सः -**

तत्राचार्यनागेशमतानुसारं मीमांसकानाम्मते फूत्कारादिव्यापाररूपोऽर्थः 'पचतीत्येतद्-पदघटक'ति'प्रत्ययस्य वर्तते, तदा च तस्यैव 'ति' प्रत्ययस्य 'गच्छती'त्यत्रापि सत्त्वादत्रापि फूत्कारादिव्यापारप्रतीतिर्भवितव्या। अत्र चैतां प्रतीतिमपाकर्तुं पृथग्रूपेणैकः कार्यकारणभावो मीमांसकैः कल्पनीयो भविष्यति। अत्र मीमांसकैर्वक्तव्यं भविष्यति यद्यत्र पच्धातुसमभिव्याहृततिङ्पदेन (पचतीत्यनेन) फूत्काररूपार्थस्य बोधाो जायते, तत्राख्यातार्थफूत्कारविषयको बोधो भवति। अत्र च (गच्छतीत्यत्र) पच्धातुसमभिव्याहारो न वर्ततेऽतोऽत्र फूत्कारादिव्यापारप्रतीतिरपि न भविष्यतीति। अत्र चोक्तमाचार्येण यद् यद्येवं रीत्यात्र दोषवारणं मीमांसकैः क्रियते तर्हि गच्छतीत्यत्र तु दोषापहारो भविष्यति किन्त्वेतदर्थमुक्तः कार्यकारणभावस्तु कल्पनीयो भविष्यत्येव। एतदपि गौरवास्पदमेवेति।[9] आचार्यनागेशमतानुसारञ्च कस्यापि कार्यकारणभावस्य कल्पना नैव हि करणीया वर्तत इति तु स्पष्टमेवेति। अन्यश्च दोष एतच्छास्त्रीयसकर्मकाकर्मकव्यवस्थायां समापतति। स च - शास्त्रेऽस्मिन् धत्वर्थव्यापारव्यधिकरण-फलवाचकत्वं सकर्मकत्वमथ च धात्वर्थव्यापार-समानाधिकरणफलवाचकत्वमकर्मकत्वमिति सकर्मकाकर्मकव्यवस्थाया लक्षणं स्वीक्रियते। एषा च व्यवस्था 'आख्यातार्थो व्यापार' इत्येतन्मते न भवितुं शक्या, यतोहि तत्र व्यापारवाचकत्वं धातोरेव स्वीकृतं वर्तते, न तु प्रत्ययस्येति[10]। अत्र चास्या अव्यवस्थायाः समाधानाय मीमांसकैः सकर्मकाकर्मकव्यवस्थासमुपस्थापकं स्वकीयं लक्षणं समुद्गीर्यते। **तच्चप्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्, प्रत्ययार्थव्यापारसमानाधिकरण-फलवाचकत्वमकर्मकत्वमिति। अस्यायमभिप्रायः** - मीमांसकैः सकर्मकाकर्मकव्यवस्थायै स्वकीयरीत्यान्यल्लक्षणं कथ्यते। अत्र शाब्दिकानामनुसारं सकर्मकाकर्मकव्यवस्थायै फलं व्यापारश्चावुभावर्थौ

धातोरेव भवितव्यौ किन्तु मीमांसकरीत्या व्यापारार्थस्तु प्रत्ययस्यैव वर्तते न धातोस्तर्हि कथमुक्तव्यवस्था संगच्छत इति चेदुच्यते तैर्यथा भवद्भिः (शाब्दिकैः) धातोरर्थो व्यापारः स्वीक्रियते तथैव व्यापाररूपोऽर्थः प्रत्ययस्य स्वीक्रियन्ताम्। तथा च स्वीकारे प्रत्ययार्थो यो व्यापारस्तत्समानाधिकरण-फलवाचकत्वमकर्मकत्वमित्यथ च प्रत्ययार्थो यो व्यापारस्तद्व्यधिकरणफलवाचकत्वं सकर्मकत्वमिति लक्षणे न काप्यनुपपत्तिरिति। तदा च **'कर्ता'**पि प्रत्ययार्थव्यापाराश्रयरूप एव भविष्यति। **'घटं भावयती'**त्यत्र च णिच्प्रत्ययार्थव्यापाराश्रयरूप एव कर्ता। एवञ्च 'घटं भावयती'त्यत्र णिच्प्रत्ययार्थप्रेषणादिव्यापाराश्रयो घटनिर्माता देवदत्तो वर्ततेऽतः स एव कर्ता भविष्यति, घटस्य च अचेनत्वात् स प्रेषणादिव्यापाराश्रयो नैव हि भवितुं शक्नोत्यतः स कर्तापि न भविष्यति। एतदवस्थायाञ्चाणौ यः कर्ता स णौ कर्म स्यादित्यर्थकेन **'गतिबुद्धी'**ति[11] सूत्रेण यद्यपि घटस्य कर्मसञ्ज्ञा न सेत्स्यति तथापि **'कर्तुरीप्सिततममि'**ति[12] कर्मसञ्ज्ञाविधायकेन सूत्रेण णिच्प्रत्ययार्थव्यापारस्याधिकरणाद् भिन्नेऽधिकरणे

---

1. वैयाकरणभूषणसारे धात्वर्थनिर्णये प्रथमायाः कारिकायाः पूर्वार्धः।
2. वैयाकरणभूषणसारे धात्वर्थनिर्णये वाक्यार्थनिरूपणप्रसङ्गे।
3. शाब्दिकनये यो 'व्यापारः' स एव मीमांसकमते 'भावने'ति।
4. अलब्धस्य लाभो योगः, लब्धस्य रक्षणं क्षेम इति।
5. अथ दर्शनान्तरीयरीत्या व्यापारस्य धात्वर्थत्वाभावात्तत्र लकारविधिः स्यादिति चेत्, तर्हि कृतामपि कर्तृकर्मादिवाचित्वं न सिध्येत्, 'कर्तरि कृत्' इति च 'लः कर्मणि' इत्यनेन तुल्ययोगक्षेमम्–वैयाकरणभूषणसारे धात्वर्थनिर्णये आख्यातार्थः कर्तेति निरूपणप्रसङ्गे।
6. किञ्च 'पचति देवदत्तः' इत्यत्राभेदान्वयदर्शनात्तदनुरोधेन कर्तुर्वाच्यत्वमावश्यकम् 'पक्ता देवदत्त' इतिवत् – वैयाकरणभूषणसारे धात्वर्थनिर्णय आख्यातार्थः कर्तेति निरूपणप्रसङ्गे।
7. यत्तु मीमांसकाः फलं धात्वर्थो व्यापारः प्रत्ययार्थ इति वदन्ति। तन्न, लः कर्मणि इत्यादिसूत्रविरोधापत्तेः। न हि तेन व्यापारस्य प्रत्ययार्थता लभ्यते–परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।
8. किञ्च 'पचति' 'पक्ष्यति' 'पक्ववानित्यादौ फूत्कारादिप्रतीतये तत्रानेकप्रत्ययानां शक्तिकल्पनापेक्षयैकस्यैव धातोरेव शक्तिकल्पनोचिता–परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।
9. किञ्च फूत्कारादेः प्रत्ययार्थत्वे गच्छतीत्यादौ तत्प्रतीतिवारणाय तद्बोधो पचिसमभिव्याहारस्यापि कारणत्वकल्पनेऽतिगौरवम् – परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।
10. किञ्च सकर्मकाकर्मकव्यवहारोच्छेदापत्तिः – परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।
11. अष्टाध्यायीसूत्रसंख्या 1-4-52
12. अष्टाध्यायीसूत्रसंख्या – 1-4-49
13. न च प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्, तन्मते तत्समानाधिकरणफलवाचकत्वमकर्मत्वं प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वम्, घटं भावयतीत्यादौ णिजर्थव्यापारव्यधिकरणफलाश्रयत्वेन घटादेः कर्मत्वमिति वाच्यम् – परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।

वर्त्तमानस्य फलस्याश्रयत्वं प्रयोज्ये कर्तरि घटादौ सत्त्वात् तस्य फलाश्रयत्वाच्च घटः कर्मसञ्ज्ञा भविष्यत्यतो न कोऽपि दोषोऽत्रेतिमीमांसकानां विचारणा।[13] **किन्त्वेतस्या अपि खण्डनं क्रियत आचार्येण नागेशेनोच्यते च**- यदि मीमांसकानामेषैव रीतिः स्वीक्रियते चेत्तर्हि **'अभिधानानभिधानव्यवस्थाया उच्छेदापत्तिर्भवतीति।[1] अत्रायं भावः** -

तत्र शास्त्रेऽस्मिन् वर्तते काचिदेका व्यवस्था विशेषाभिधानानभिधानव्यवस्था-परपर्याया। अत्र चैकं प्रमुखं सूत्रं भवति **'अनभिहिते'**[2] इति। सूत्रोक्तस्या'नभिहिते'ति पदस्यानुक्ते इत्यर्थो विद्यते। तेन चानुक्ते तत्तत्कारके तत्तद्विभक्तयोऽनेन सूत्रेण विधीयन्ते। यथानुक्ते कर्मणि द्वितीया **'कर्मणि[3] द्वितीये'**ति सूत्रेण। इत्थमेवानुक्ते कर्तरि करणे च तृतीया **'कर्तृकरणयोस्तृतीये'**ति[4] सूत्रेण। उक्तेषु च सर्वेष्वपि कारकेषु प्रथमैव भवति, **'तिङ् समानाधिकरणे प्रथमा'**,[5] **'अभिहिते प्रथमे'**ति[6] वचनबलादिति। अभिधानञ्च प्रायेण **तिङ्कृत्तद्धितसमासैर्भवतीत्युक्तं**[7] सिद्धान्तकौमुद्यामाचार्येण दीक्षितेन। एतद्वचनबलात्तिङर्थो यो भवति स एवोक्त इति कथ्यते। तत्र च प्रातिपदिकार्थमात्रे प्रथमा भवति **'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमे'ति**[8] सूत्रेण। अतस्तत्तत्कारकेषु प्रथमाया अथ च द्वितीयादिविभक्तीनां विधानाय तिङस्तत्तदर्थवाचकत्वं परमावश्यकं वर्तते। यदि चात्र मीमांसकानामनुसारं तिङो भावनार्थकत्वमेव भविष्यति न तु कर्त्ताद्यर्थकत्वं तर्हि कथमुक्ता व्यवस्था संगमिष्यतेऽत उक्तानुक्तव्यवस्थायै तिङः कर्त्रादिवाचकत्वं नूनमेव परमावश्यकमिति तात्पर्यम्। अन्यथा तूक्तव्यस्थोच्छेदापत्तिरेवेति।

अत्र च मीमांसकैरभिधानानभिधानव्यवस्था स्वमतानुसारं समुपस्थाप्यत **उच्यते च**- कर्तृवाच्ये प्रत्ययार्थो यो व्यापारो वर्तते, स कर्तारं विनानुपपन्नं वर्ततेऽतः स (व्यापारः) स्वोत्पादकस्याक्षेपः करिष्यति, तेन च कर्तृरूपोऽर्थ एवोक्तो भविष्यति। कर्मवाच्ये च यत्प्रधानीभूतं फलं विद्यते तत् स्वाश्रयस्य कर्मण आक्षेपं करिष्यति, तदा कर्माप्युक्तं भविष्यति। अत्र चोच्यते शाब्दिकैर्यत्त्वन्मत आक्षिप्तार्थस्य प्राधान्यं भवति, तेन च कर्तृकर्मणोरेव प्राधान्यं न त्वन्यस्य। **अत्रेदं तत्त्वम्**- मीमांसका जातावेव शक्तिं स्वीकुर्वन्ति। एतन्मतानुसारं **'घटमानये'**ति वाक्यास्य **'घटत्वमानये'**त्यर्थो विद्यते। तदा च घटत्वस्यामूर्तस्य कथमानयनक्रियायामन्वयः संभविष्यतीति प्रश्ने तैर्व्यक्तेराक्षेपः क्रियते। आक्षिप्तस्य

---

1 अभिधानानभिधानव्यवस्थोच्छेदापत्तेः - परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।

2 अष्टाध्यायीसूत्रसंख्या - 2-3-1

3 अष्टाध्यायीसूत्रसंख्या - 2-3-2

4 अष्टाध्यायीसूत्रसंख्या - 2-3-18

5 परमलघुमञ्जूषायां कारकप्रकरणे प्रथमा कारके।

6 तदेव

7 वैयाकरणासिद्धान्तकौमुद्यां कारकप्रकरणे 'कर्मणि द्वितीये'ति सूत्रे।

8 अष्टाध्यायीसूत्रसंख्या - 2-3-46

च तस्य द्रव्यस्य (घटस्य) आनयनक्रियायामन्वये सत्यर्थबोधस्तन्मते समुपजायते। तेन चाक्षिप्तस्य घटव्यक्तेः प्रधानता स्पष्टैव वर्तते। यथा- **'घटमानये'**त्यादावाक्षिप्तस्य घटव्यक्तेः प्रधानता भवति, तथैवात्राप्यक्षिप्तस्य कर्तृकर्मादिरूपार्थस्य प्रधानता भविष्यत्येव। तथा च सति क्रियाया अप्रधानतायां **'भावप्रधानमाख्यातमि'ति** निरुक्तवचनेन सह विरोधापत्तिः स्पष्टैव।[1]

**अन्यश्च दोषः**- यदि मीमांसकाः प्रत्ययार्थो व्यापार एवेत्येव स्वीकुर्वन्ति, तर्हि फलरूपोऽर्थो धातोर्भविष्यति, फलाश्रयस्य कर्मणश्चाक्षेपेण लाभे संभवे, तदर्थप्राप्तये (कर्मरूपार्थप्राप्तये) **'लः कर्मणि च भावे चाऽऽकर्मकेभ्यः'**[2] इति सूत्रेण यत् कर्मण्यर्थे लकारस्य विधानं क्रियते तद्व्यर्थमेव[3] भविष्यति।

एतदतिरिच्य यत्र कर्मार्थे कृत्प्रत्ययो भवति यथा **'पक्व'** इत्यत्र **'क्ते'**ति, **'पाचक'** इत्यत्र च कर्त्रर्थको **'ण्वुल्'**प्रत्यय एतेषां सर्वेषामपि तत्तत्कारकवाचकत्वेन सह व्यापारवाचकत्वमपि स्वीकरणीयं भविष्यति। एवञ्चैकस्यैव प्रत्ययस्योभयवाचकत्वे गौरवमेव[4] वर्तत इति।

**अन्यश्च दोषः -**

अत्र च यदि मीमांसकैर्व्यापारस्याक्षेपेण लाभं कृत्वा, कृत्प्रत्यये च व्यापारावाचकत्वं स्वीक्रियते तर्हि यत्र भावे घञ् (ल्युट्) प्रत्ययो भवति यथा **'गमनमि'**त्यत्र तस्यापि व्यापाररूपार्थाभावे धात्वर्थफलमिव (संयोगस्येव) **'गमनमि'**त्यस्यापि संयोगमात्रमर्थो भविष्यति। तथा च सति **'गमनवानित्यस्य संयोगवानित्यर्थो'** भविष्यति, तदा च ग्रामेण सह संयोगे सति **'संयोगवान् ग्राम'** इतिवद् इत्यर्थे वा **'गमनवान् ग्राम'** इत्यनिष्टप्रयोगापत्तिः। इदानीमपि च यदि मीमांसका इमामनिष्टापत्तिमपाकर्तुं व्यापारवाचकत्वं भावविहितप्रत्यये स्वीकुर्वन्ति चेत्तर्हि ग्रामस्याचेतनत्वाद्, तस्य व्यापारवतोऽभावाद-निष्टापत्तिस्त्वपाकर्तुं शक्या किन्तु तदा यथा 'चैत्रः पचती'त्यादिस्थलेष्वाक्षिप्तस्याश्रयस्य चैत्रस्योक्तत्वात्तत्र (चैत्रे) प्रथमा जायते तथैव **'देवदत्तस्य गमनमि'**त्यत्रापि ल्युट्प्रत्ययार्थव्यापारेण देवदत्तरूपकर्तुराक्षेपेण लाभे सति तत्रापि देवदत्तेऽपि प्रथममापत्तिर्भविष्यतीति।[5]

---

1 न च व्यापारेणाश्रयाक्षेपात् कर्तुरभिधानम्, कर्माख्याते च प्रधानेन फलेन स्वाश्रयाक्षेपात्कर्मणोऽभिधानमिति वाच्यम्, जातिशक्तिवादे जात्याक्षिप्तव्यक्तेरिवाश्रयप्राधान्यापत्तौ क्रियाप्रधानमाख्यातमिति यास्कवचोविराधापत्तेः - परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।

2 अष्टाध्यायीसूत्रसंख्या- 3-4-69

3 किञ्च फलस्य धातुना तदाश्रयस्य चाक्षेपेणैव लाभसंभवे लः कर्मणि इत्यस्य वैयर्थ्यापत्तेः - परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।

4 कर्मकर्तृकृतां कारकभावनोभयवाचकत्वे गौरवाच्च - परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।

5 किञ्च भावविहितघञादीनां व्यापारावाचकत्वे ग्रामो गमनवानित्याद्यापत्तिः, तद्वाचकत्वे तु तेनापि स्वाश्रयाक्षेपे कर्तुरभिधानापतिः - परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।

**अन्यश्च दोषो 'गुरुः शिष्याभ्यां पाचयती'त्येतस्मिन् वाक्ये समापतति। स चेत्थम्-** यदि मीमांसकाः पूर्वोक्तार्थमेव स्वीकुर्वन्ति चेत्तर्हि 'गुरुः शिष्याभ्यां पाचयती'त्येतस्मिन् वाक्ये **'गुरौ प्रथमानापत्तिः, शिष्ये प्रथमापत्तिः, शिष्य एव द्विवचनानापत्तिः, पाचयतीत्यत्र चैकवचनानापत्तिर्भविष्यति। यतोहि 'हेतुमति चे'ति**[1] सूत्रेण प्रयोजकव्यापारे प्रेषणाद्यर्थे णिच्प्रत्ययस्य विधानत्वात् प्रयोजकव्यापारो णिजर्थो भविष्यति, अवशिष्टश्च प्रयोज्यव्यापाररूपोऽर्थः सोऽथ च प्रयोज्यकर्तुः संख्या, आख्यातस्यार्थो भविष्यति। तथा च सति तिङा गुरुरूपप्रयोजककर्तुः संख्याया अनुक्तत्वात् तत्र (गुरौ) प्रथमाया अनापत्तिर्वर्तते, 'ती'ति प्रत्ययेन चैकत्वसंख्याया एवोक्तत्वात् तस्यैवैकत्वस्य प्रयोज्ये कर्तरि शिष्येऽन्वयाद् द्विवचनानापत्तिर्भविष्यति। **अन्यच्च**- कर्तरि क्रियायाञ्च समानवचनत्वात् प्रयोज्ये कर्तरि शिष्ये द्वित्वात् 'पाचयती'त्यत्रापि द्विवचनानापत्तिर्भविष्यति।[2] अतो व्यापारस्तिङर्थो न तु प्रत्ययार्थ इति स्वीकर्तृणां मीमांसकानाम्मतं न समीचीनमिति रीत्याचार्येण तत्र नागेशेन तन्मतस्य खण्डनं कृतमिति।

अन्यश्च एको महान् दोषो मीमांसकपक्षे समापतति, स च **'भूवादयो धातव'**[3] इति सूत्रेण सह विरोधरूप इति। सूत्रेणानेन क्रियावाचकानामेव धातुसंज्ञा क्रियते। क्रिया च नाम व्यापार इत्युक्तमेव पूर्वम्। सैव च एव क्रिया मीमांसकनये भावनेत्यपि प्रमाणपुरस्सरं प्रतिपादितम्। तथा च धातुसञ्ज्ञायै धातौ क्रियावाचकत्वं नूनमेव भवितव्यम्। मीमांसकमतानुसारञ्च धातोः फलमात्रमेवार्थो विद्यते, न तु व्यापारार्थस्तदा कथं धातुसञ्ज्ञा तन्मते। तथा चैतेन प्रकृतसूत्रेण सह तेषां विरोधः स्पष्ट एवात आख्यातार्थो व्यापारो न स्वीकरणीय इत्याचार्ययोरभिप्राय इति शम्।

---

1. अष्टाध्यायीसूत्रसंख्या - 3-1-26
2. किञ्च गुरुः शिष्याभ्यां पाचयति इत्यादौ 'हेतुमति च' इति सूत्रबलात् प्रयोजकव्यापारस्य णिजर्थत्वे स्थिते प्रयोज्यव्यापार आख्यातार्थो वाच्यः। एवं च संख्याया स्ववाचकाख्यातार्थव्यापारेऽन्वयिन्येवान्वयाच्छिष्याभ्यामिति द्विवचनानापत्तिः। पाचयत्येकवचनानापत्तिश्च। गुरोरनभिधानेन तत्र प्रथमाया अनापत्तेश्च। शिष्यशब्दात्तदापत्तेश्चेत्यन्यत्र विस्तरः - परमलघुमञ्जूषायां धात्वर्थप्रकरणे आख्यातार्थो व्यापार इति मीमांसकमतखण्डनप्रसङ्गे।
3. अष्टाध्यायीसूत्रसंख्या - 1-3-1मीमांसकानामतमिदं खण्डयन्नग्रे वदति ग्रन्थकारो यद्यथा- मीमांसकैः **'पक्ता देवदत्त'** इत्यादिस्थलेषु तृजर्थकर्तुर्देवदत्तरूपकर्तर्यभेदेन सम्बन्धेनान्वयः क्रियते तथैव **'पचति देवदत्त'** इत्यादावप्यभेदबोधायाख्यातस्य कर्तृवाचकत्वमावश्यकमिति। अन्यथात्राभेदसम्बन्धेन बोधो नैव हि भवितुं शक्यः। अत्र च (पचति देवदत्त इत्यत्र) **देवदत्ताभिन्नाश्रयकः पाकानुकूलव्यापार** ...यभेदसम्बन्धेन बोधः सर्वानुभवसिद्धो वर्तते। एतदर्थञ्चाख्यातस्य कर्तृवाचकत्वमावश्यकमेवेति। प्रकृते ...ातार्थसामान्यकर्तुर्देवदत्तरूपविशेषकर्त्रा सह **'सामान्यविशेषयोरभेद'** इति न्यायेनाभेदेन बोधे जायत ए अतः **'पचति देवदत्त'** इत्याद्यनुरोधन्मीमांसकानामाख्यातार्थो भावनेति मतं न समीचीनमित्याशयो ग्रन्थकारस्येति।[6] एषैव च द्वितीया युक्तिः।

ISSN - 0974-8946
अप्रैल-जून, 2019

शोधप्रभा
वर्षः 44, द्वितीयोऽङ्कः

# रासपञ्चाध्याय्यास्तिङन्ततद्धितान्तेषु आर्षप्रयोगाणां विवेचनम्

रजनी

**रासपञ्चाध्याय्या वैशिष्ट्याकलनम्-**

**यस्या रासविलासवृत्तिमखिलं श्रुत्वाधिगत्यापि वा**
**पापीयान् पुरुषोऽपि विन्दति रतिं कृष्णे परब्रह्मणि।**
**सेयं मे परदेवता भगवती कृष्णप्रिया राधिका**
**कृष्णैकान्तरतिं करोतु सततं संसारसक्तां मतिम्॥[1]**

यावान्महिमा श्रीकृष्णस्य तावानेव महिमा श्रीमद्भागवतस्य। द्वादशाऽङ्गोऽयं पुरुष इति वचनादुभयोरभेदः। एकस्तावद्भगवतोऽर्चाविग्रहस्सेव्यस्वरूपः। अपरो भगवतो वाङ्मयो विग्रहस्सेव्यः स्मर्तव्यः कीर्तितव्यो निदिध्यासितव्यः श्रोतव्योऽपि। श्रीमद्भागवतं भगवतो व्रजनन्दनस्य वाङ्मयविग्रहः। तत्र दशमस्कन्धः श्रीकृष्णचरणानां हृदयं निरोधाऽभिधम्। श्रीमद्भागवते २९, ३०, ३१, ३२, ३३ एते पञ्चाध्यायाः 'रासपञ्चाध्यायी' नाम्ना प्रोच्यन्ते। रासलीलाया एते पञ्चाध्यायाः श्रीमद्भागवतस्य पञ्चप्राणाः सन्ति-

**प्राणाः सर्वशरीरवृत्तिषु बुधोद्याने च देवद्रुमाः**
**विष्ण्वाद्या विबुधेषु मन्युषु महा-यज्ञा वरिष्ठा यथा।**
**श्रीमद्भागवते स्फुटं रसमया रासाभिधेयास्तथा**
**ध्यायाःपञ्च भवन्ति यत्र लसति प्रेष्ठप्रबोधोदयः॥[2]**

लीलेयं रसमयी रहस्यमयी परमानन्दमयी किन्तु सामान्यजनानां कृते तु सन्देहमयी। रासलीलायां प्रथमं रासशब्दार्थाः विचारणीयाः- बहुनर्तकीनृत्यविशेषो रासस्तद्रूपां क्रीडां स्वेच्छानुकूलचेष्टामिति स्वातन्त्र्यद्योतनं रसानां समूहो वा रासो रससमूहाविर्भाविकां वा क्रीडाम् (भाव.[3]), नृत्यगीतचुम्बनालिङ्गनादीनां रसानां समूहो रासस्तन्मयी या क्रीडा (सारार्थ.)[4], यद्वा रसकदम्बमयः कश्चिद्विलक्षणो व्रजलीला

---

* शोधच्छात्रा, व्याकरण-विभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-110016

1. रासपञ्चाध्याय्याः प्रस्तावनायां हरिप्रियाटीकाकर्तुर्हृदयोद्गाराः
2. हरिप्रिया टीका श्लोक संख्या 2
3. श्रीरामनारायणकृता भावभावविभाविका
4. श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

विशेषः यद्वा रसो मुख्यरसश्शुद्धः प्रेमस्सः एव रासः तद्रूपो य उत्सवः (विशुद्ध.)[1], रासक्रीडां श्रवणमननिदिध्यासनादिनोत्पन्नरसानां समूहो रासः, प्रेमरसपरिपाकात्मविलासविशेषात्मकः क्रीडाविशेषः (रा.रह.)[2], रसस्याऽऽनन्दस्याभिव्यक्तिर्यस्मात् स रासः (बा.प्रबो.)[3]।

**रासलक्षणं तु– "एकस्य पुंसो बह्वीभिः स्त्रीभिः क्रीडा तु मण्डलैः"** (भावार्थ.)[4]।

सम्प्रति 'रसः' इत्यस्य शब्दस्य कोऽर्थः? रसशब्दस्य जिज्ञासायामुक्तम्– "रसो वै सः","स सर्वरसः", "स सर्वगन्धः", "रसमेनं लब्ध्वा ह्यानन्दी भवति", सदेव सौम्य इदमग्र आसीदित्यादिश्रुतिभिर्ब्रह्मण एव रसत्वं बोध्यते।

रसविषये तु श्रीमदाचार्यचरणा आहुः "रसस्तु तच्छास्त्रसिद्ध एव गृह्यते। तच्छास्त्राणीति निर्देशेन रसगङ्गाधरकाव्यप्रकाशसाहित्यदर्पणप्रभृतीनि ज्ञातव्यानि। तेषु शास्त्रेषु तच्चिन्तकैः रसस्वरूपं वर्णितम्। तस्य स्वरूपमाहुः–

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥**
**विभावानुभावास्तत् कथ्यन्ते व्यभिचारिणः।**
**व्यक्तः सर्वैर्विभावाद्यैः स्थायीभावो रसः स्मृतः॥**[5]

विभावानुभावव्यभिचारिभावानां संयोगाद्रसाविर्भावो भवति। अयमेव रसस्याविर्भावप्रकारः। नाऽयं लौकिक श्रीङ्गाररसः। **'अयं तु भगवद्रसः भगवद्रूपः'** यो हि रासः स एव भजनानन्दः। तमानन्दं भगवानेव प्रदातुमीहेत तदोपलभ्येत।

श्रीमद्भागवते, दशमस्कन्धे तथा च रासपञ्चाध्याय्याम् आचार्यवर्याणां प्रचेतसाञ्च विविधाष्टीका विरचिताः। यथा श्रीधरस्वामिविरचिता-भावार्थदीपिका, श्रीवंशीधरकृतः भावार्थदीपिकाप्रकाशः, श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी, श्रीमद्विजयध्वजतीर्थकृता-पदरत्नावली, श्रीमद्विश्वनाथचक्रवर्तिकृता-सारार्थदर्शिनी, श्रीमद्वल्लभाचार्यचरणविरचिता-श्रीसुबोधिनी। इतोऽपि प्रचेतसां बह्व्यष्टीका-स्सन्ति यासु विद्वद्भिः सविस्तेरण रासलीलाया महिमा उपवर्णिता। केनचिद् रासलीला कामविजयरूपेण कथिता, केनचिद् भगवतो दिव्यविहाररूपेण तथा च केनचिदस्या आध्यात्मिकदृष्ट्या अर्थः कृतः। भगवान् श्रीकृष्ण आत्मा, आत्माकारवृत्तिः श्रीराधा तथा च अन्या आत्माभिमुखवृत्तय गोप्यस्सन्ति, तेषां समेषां धाराप्रवाहरूपेण निरन्तरमात्मरमणमेव रासोऽस्ति। सर्वप्रकारेणैव रासलीलाया महिमा सर्वोत्कृष्टाशृङ्गाररसाकृष्टचेतसोऽतिबहिर्मुखानपि स्वपरान् कर्तुं भगवान् श्रीकृष्ण रासलीलामपि

---

1 विशुद्धरसदीपिका
2. रास-रहस्य-टीका
3. श्रीगोस्वामिश्रीगिरिधरलालकृता-बालप्रबोधिनी
4. श्रीवंशीधरकृतः-भावार्थदीपिकाप्रकाशः।
5. काव्यप्रकाशः, चतुर्थ उल्लासः-सू. ४३(२७-२८)

कृतवान्। इयं हि रसमयी क्रीडा सर्वेषां मनुष्याणां चेतो भगवन्तं प्रति बलान्नयतीति। **"ब्रह्मात्मैक्यलक्षणम्"** रासलीलाख्या यां श्रुत्वा श्रवणमात्रेणैव तत्परः श्रीभगवत्परो भवेत् परमात्मानुसन्धानपरो भवेज् जन इति। रसाश्रया **"रसो वै सः"**[1] इति रसानां समूहो रासो रसस्वरूप आत्मा इति **"रासलीला"** अर्थात् **"आत्मलीला"**आश्रयणेन आत्मक्रीडस्यात्मन अपरोक्ष्येण साक्षात्कारस्यैव काव्यकथानां रसवत्त्वं सूचितमिति।

**शृङ्गारकथोपदेशेन निवृत्तिपरेयं पञ्चाध्यायीति श्रीस्वामिपादाः।**

एवञ्च शुद्धप्रेमरसेनैव सेवनीयौ श्रीराधाकृष्णाविति प्रकरणार्थः। नह्येषा कामक्रीडा न चैते परदाराः किन्तु परमात्मस्वरूपिण्याः श्रीराधायाः प्रतिबिम्बरूपाः प्रेमविशेषक्रीडापरिकराः नित्यसिद्धास्साधनसिद्धभक्तजनानुग्रहाय प्रकटीभूय निजभावभावितस्वान्तान् विधाय परिकरेषु प्रवेशयन्तीति **"कामविजय"** एव प्रकरणार्थ इति प्रेक्षावतां व्याख्या। कामक्रोधादिविनिर्मुक्तस्य बालकस्य विहारो यथा लीलामात्रं तथैव सृष्ट्यादिवदिदमपि विहरणं लीलामात्रमिति भावः। एवम्भूतस्यार्भकस्य रागद्वेषादिविनिर्मुक्तस्य स्वप्रतिबिम्बैः सह विभ्रमः क्रीडा यस्य स शिशु यथा रमते तथा परमात्माऽपि स्वभूताभिस्ताभिः वृत्तिभिः रेमे। आत्मनि स्वविग्रहे एवावरुद्धं सौरतं सुरते भवं शुक्रं यस्येत्यसंख्यात-गोपिकारमणेऽप्यप्रच्युतशुक्रत्वेन कामविजयख्यापनम्। गोपीनां तासां पतीनाञ्च तथा सर्वेषामपि देहिनां योऽन्तश्चरति नियन्तृतया वर्त्तते सोऽध्यक्षस्सर्वबुद्ध्यादिसाक्षी तथा च योऽन्तश्चरति तस्य बहिरालिङ्गने को दोषः। यश्च बुद्ध्यादिद्रष्टा रहसि बहिर्गात्रदर्शने च को दोष इति भावः। वीर्यं निरुध्य सुरतं करोतीति अयमेव कामजयः- **"स्त्रीसङ्गेऽपि न पतितं रेतो यस्य परेच्छया। स धन्यः पुरुषो लोककामजेता स कथ्यते[2]॥"**

भगवतः कामविजयरूपरासक्रीडां यः पुमान् श्रद्धान्वितस्सन् अन्वनुक्रमेण शृणुयात् अथवा वर्णयेच्छ्रावयेत् स पुमान् भगवति परामुत्कृष्टां भक्तिमाशु प्राप्य जीवदशायां जितेन्द्रियः सन् कामं कामाख्यं शत्रुं हृत्स्थं रोगवदनर्थकरमज्ञानञ्च अचिरेण निरस्यति-

**दारागार-सुतात्मवित्त-सुहृदः स्वीयत्वबुद्ध्याश्रिताः**<br>
**ते सर्वेऽपि निजार्थसाधनपरा नैवाप्तभावं गताः।**<br>
**दृष्ट्वालोकविधेर्विचित्रचरितं खिन्नो नितान्तं प्रभो,**<br>
**तस्मात्ते चरणं ह्यनन्यशरणः प्राप्तो विभो पाहि माम्॥**[3]

रासपञ्चाध्याय्यां प्रयुक्तेषु तिङन्तेषु तद्धितान्तेषु च बहूनि पदानि अपाणिनीयानि सन्ति। भगवतो व्यासस्य ऋषित्वाद् अवतारत्वाच्च तानि पदानि साधूनि सन्त्यपि पाणिनीयव्याकरणेन अनिष्पाद्यतया आर्षाणि इति निश्चेतुं शक्यन्ते। भगवतो व्यासस्य सर्वज्ञत्वात् तत्कृतप्रयोगानां पाणिनीयपूर्ववर्ती व्याकरणानन्तरेण साधयितुं शक्यता सम्भवति। यद्वा टि, घु, घा, संज्ञादिनां यथा शिष्टप्रयोगात् साधुता तथैव एतदीयप्रयोगाणामपि तथाविधशिष्टप्रयोगादेव साधुत्वमङ्गीकार्यम्। अतः रासपञ्चाध्याय्याः तेषां

1. तैत्तिरीयोपनिषत् २.७.२
2. इति संहितोक्तिः
3. रासपञ्चाध्याय्याः चरमश्लोकव्याख्याने हरिप्रियाटीकाकर्तुर्हृदयोद्गाराः

तेषाम् अपाणिनीयप्रयोगाणां विवेचनप्रसङ्गे टीकाकृद्भिरार्ष इत्युक्त्वा व्याख्यानं कृतम्। बहुषु स्थलेषु व्याकरण-टीकाकारैः आर्षत्वे हेतूपन्यासपूर्वकं प्रसक्तं शास्त्रमपि निरदेशि।

रासपञ्चाध्याय्यां तिङन्तेषु अष्टौ प्रयोगा आर्षत्वेन निर्दिष्टा विलोक्यन्ते ते चेमे- दुह्यत, प्रामृजत्, कृध्वम्, अपिदध्वम्, अबिभ्रन्, मुह्यते, निववृतुः, ऐक्षत्।

अत्र अष्टस्वपि न समाना विप्रतिपत्तिः। द्वयोः स्थलयोः गणकार्यम् आर्षम्। तद्यथा **'दुह्यत'** इत्यत्र **'दुह'** प्रपूरणे इति धातोः अदादित्वेऽपि दैवादिकत्वमार्षम् अतः **'दुह्यत'** इत्यत्र **'श्यन्'** दृश्यते अतश्च वंशीधरीकार अत्रेत्थं व्याचष्टे दैवादिकत्वं **तद् यात मा चिरं.......बालाश्च तान् पायय‌त दुह्यत**।। (१०.२९.२२)

**'दुह्यत'**-दुहेरार्षम्[1]। वैष्णवतोषिणीकारस्तु पाणिनीयप्रयोगमुखेन साधुरूपं प्रदर्श्य अत्र अन्तर्भावितण्यर्थमुद्भाव्य तात्पर्यार्थम् आविष्करोति-दुह्यत, दुग्ध-दोहयतेत्यर्थः[2]। अन्वितार्थप्रकाशिकाकारस्तु विकरणमात्रमार्षत्वेन स्वीकरोति अतस्स व्यलिखत्- श्यन्नार्ष[3] इति। एवमेव **'प्रामृजत्'** इति प्रयोगेऽपि अन्वितार्थप्रकाशिकाकारो मृजेस्तुदादित्वमार्षम्[4] इति निर्दिशति। टीकान्तरन्तु केवलम् अर्थं निर्दिशति न तु व्युत्पत्तिचिन्तां कुरुते तद्यथा- प्रकर्षेणामृजत् (वैष्णवतो.)[5], परिमृष्टवान् (भागवत.)[6], विश्वनाथचक्रवर्तिः त्वत्र **'प्रामृजत्'** इति उपलक्षणे तेन वीजनानुलेपनप्रत्यङ्ग-प्रसाधनवीटिकाप्रदानान्यपि चक्रे[8] इति व्याख्याति। रास-रहस्यकारस्तु दार्शनिकव्याख्यानं कुर्वन् विलेख अविद्यान्धकारं प्रकर्षेण दूरीकृतवानिति लिलेख।

**मातरः पितरः पुत्रा भ्रातरः..........मा कृद्वं (कृध्वम्) बन्धुसाध्वसम्**[9]।

**'कृध्वम्'**, **'अपिदध्वम्'** इति द्वयोरपि प्रयोगयोः भष्भावसम्बन्धिनी अपाणिनीयता वर्तते। तद्यथा- **'मा कृध्वं बन्धुसाध्वसम्'** इत्यत्र अन्वितार्थप्रकाशिकाकारः ढत्वाभावमार्षं[10] मनुते। वैष्णवतोषिणीकारस्तु ढत्वविशिष्टं पाठं[11] मनुते। अत्र **'न माङ्योगे'** इति सूत्रव्यापारेण केचन लुङ्लकारं केचन लोट्लकारमेव मन्वते।

---

1. वंशीधरीटीकाकारः श्लोकसंख्या १०.२९.२२
2. वैष्णवतोषिणीकारः श्लोकसंख्या १०.२९.२२
3. अन्वितार्थप्रकाशिकाकारः श्लोकसंख्या १०.२९.२२
4. अन्वितार्थप्रकाशिकाकारः श्लोकसंख्या १०.२९.२२
5. श्रीमज्जीवगोस्वामिकृता-वैष्णवतोषिणी टीका
6. श्रीमद्वीरराघवाचार्यकृता-भागवतचन्द्रचन्द्रिका टीका
7. विश्वनाथचक्रवर्तिः श्लोकसंख्या १०.२९.२२
8. (१०.२९.२०)
9. अन्वितार्थप्रकाशिकाकारः श्लोक संख्या १०.२९.२०
10. वैष्णवतोषिणीकारः श्लोक संख्या १०.२९.२२

**तत्रैकोवाच हे गोपा..........चक्षूंष्याश्वपिदध्वं वो विधास्ये.....( १०.३०.२२ )**

**'अपि दध्वम्'** इत्यस्य तु निमीलयत आवृणुतेत्यर्थः। अत्र अन्वितार्थप्रकाशिकाकार इत्थं बभाण- धद्ध्वमिति भष्भाववान् साधुपाठः दकारवांस्त्वार्ष[1] इति। वैष्णवतोषिणीकारस्तु आर्षत्वे हेतुमपि उपन्यस्यनाह शास्त्रस्मरणपूर्वकम्-

**दधस्तथोश्चेति स्मरणाद् अभ्यासस्य भष्भावप्राप्तेः अपिधद्ध्वम् इति वक्तव्ये अपि दध्वम् इति पाठ आर्षो लेखकप्रमादजो वा, भष्भावो वर्गचतुर्थत्वमिति[2]।**

**अबिभ्रन्-का स्त्र्यङ्ग ते कलपदायतमूर्च्छितेन..यद् गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्[3]।।**

**( अबिभरुः )** जुहो, लङ्,प्र.पु., ब.व., **'जुहोत्यादिभ्यश्श्लुः'** इत्यत्र डुभृञ् धारणपोषणयोरिति धातोः लङ्लकारे श्लौ द्वित्वे अडागमे **'अभ्यासे चर्च'** इति अभ्यासस्य इत्वे **'अबिभृ झि'** इति अवस्थायां **'सिजभ्यस्तविदिभ्यश्च'** इति झेर्जुसि, **'जुसि च'** इत्यनेन इदन्ताङ्गस्य गुणे सस्य रुत्वे विसर्गे **'अबिभरुः'** इति रूपं निष्पद्यते, किन्त्वत्र **'अबिभ्रन्'** इति पदमार्ष प्रयुक्तम्। अत्र **'झेर्जुस्' 'जुसि च'** इत्यनयोरार्षत्वाद् अप्रवृत्या झोऽन्त इत्यनेन अन्तादेशे **'इतश्च'** इति इकारलोपेन संयोगान्तलोपेन च **'अबिभ्रन्'** इति निष्पन्नं रूपं प्रयुक्तम्। **'अबिभ्रन्'** इत्यत्र अन्वितार्थप्रकाशिकाकारः-अविभरुः इत्यर्थे **'जुष्भाव'** आर्ष इति लिखति।

**रहसि संविदं हृच्छयोदयं.....मुहुरतिस्पृहा मुह्यते मनः[4]।।**

**'मुह्यते'** इति प्रयोगेऽपि मुह धातोः वैचित्ये इति उदात्तेत्त्वात् परस्मैपदत्वे मुह्यति इति भाव्यम् अतोऽत्र अन्वितार्थप्रकाशिकाकारः मुह्यते मोहं प्राप्नोति तङार्ष[5] इति लिखति। श्रीधराचार्यस्तु मुह्यति इत्येव व्याचष्टे पदरत्नावलीकारोऽत्र छान्दसं विभक्ति-व्यत्यय[6] मनुते।

**ततोऽविशन् वनं.....ततो निववृतुः स्त्रियः[7]।।**

**एका भ्रुकुटिमबाध्य.....घ्नतीवैक्षत् कटाक्षेपैः.......।।[३०]**

**'निववृतुः'** , **'ऐक्षत्'** इत्युभयोः प्रयांगयोः **'ईक्ष्'** धातोः **'वृतु'** वर्तने इति धातोः अनुदात्तेत्त्वाद् आत्मनेपदं स्यात् तेनोभयत्र तङ्भाव आर्ष[31] इति निर्दिशति अन्वितार्थ-प्रकाशिकाकारः।

---

1. अन्वितार्थप्रकाशि काकारः श्लोक संख्या १०.३०.२२
2. वैष्णवतोषिणीकारः श्लोक संख्या १०.३०.२२
3. तत्रैव(१०.२९.४०)
4. तत्रैव (१०.३१.१७)
5. अन्वितार्थप्रकाशिकाकारः श्लोकसंख्या,
6. काकारः श्लोकसंख्या १०.३१.१७
7. पदरत्नावलीकारः श्लोकसंख्या १०.३१.१७
8. (१०.३०.४३)

वस्तुतस्त्वत्र आर्षत्वकथनमनुचितं समाधानान्तरं जीवति। उभयत्रापि **'अनुदात्तेत्त्व-लक्षणमात्मनेपदमनित्यम्'** इति परिभाषया[1] एव अनुदात्तेद् लक्षणस्यात्मनेपदस्य अनित्यत्वबोधनाद् अत्र परस्मैपदत्वेऽपि न पाणिनीयत्वम्। अस्यां परिभाषायां तु चक्षिङो ङित्करणं ज्ञापनम्। अत एषा परिभाषा स्वीकारे एव उदयति **विततोर्ध्व रश्मि रज्जौ** इति माघप्रयोगस्संगच्छत। किञ्च स्फायननिर्मोकसन्धीत्यादि सिध्यति।

**इति गोप्यः प्रगायन्त्यः....**चित्रधा।
**रुरुदुः सुस्वरं........कृष्णदर्शनलालसाः।।**[32]

**'चित्रधा'**तद्धितविषयकार्षप्रयोगस्तु एक एव। **'चित्रधा'** इत्यत्र विहितो **'धा'** प्रत्ययः **'संख्याया विधार्थे धा'** इति सूत्रेण क्रियाप्रकारार्थे वर्त्तमानात् संख्याशब्दात् स्वार्थे भवति, किन्त्वत्र चित्रपदं संख्यावाचकं नास्ति। अतश्चित्रधा इत्यत्र **'धा'** प्रत्यय अपाणिनीयत्वादार्ष इति भावः। चित्रधा इत्यस्य अनेकप्रकारेणेत्यर्थः। एवं तद्धितान्तेषु तिङ्न्तेषु च इमानि नवपदानि रासपञ्चाध्याय्यां विविधैष्टीकाकृद्भिरार्षत्वेन निर्दिष्टानि यथायथं विमृष्टानि।

1. अन्वितार्थप्रकाशिकाकारः श्लोकसंख्या १०.३०.४३,१०.३२.६
2. परिभाषेन्दुशेखरः, परिभाषासंख्या ९७, पृष्ठसंख्या-२३२

ISSN - 0974-8946
अप्रैल-जून, 2019

शोधप्रभा
वर्षः 44, द्वितीयोऽङ्कः

# न्यायदिशा असिद्धहेत्वाभासस्य समीक्षात्मकविचारः

श्रीयशवन्तकुमारत्रिवेदी

व्याप्तिपक्षधर्मताविशिष्टसद्धेतुं निरूप्य तत्त्वनिर्णयविजयप्रयोजकत्वात् एककार्यकारित्वप्रसङ्ग-सङ्गत्या च व्याप्तिपक्षधर्मत्वाभाववत्यसद्धेतोः निरूपणं तत्त्वचिन्तामणिकारैः कृतम्।[1] यथा सद्धेतुप्रयोगेन तत्त्वनिर्णयः विजयश्च भवति तथैवाऽसद्धेतोः प्रयोगात्। तत्त्वनिर्णयस्तावत् प्रमितकोटिकनिश्चयः यथा अनुमापके हेतौ व्याप्तिपक्षधर्मतादिविशिष्टसद्धेतुत्वज्ञानं साध्ये प्रमात्वज्ञानं प्रति प्रयोजकं तथैव तद्विपरीतकोटिसाधके हेतौ यदि दुष्टत्वज्ञानमुत्पद्यते तदापि प्रमितनिर्णयोऽर्थात् तत्वनिर्णयो भवति। विजयश्च यथा व्याप्तिपक्षधर्मतादिविशिष्टसद्धेतुज्ञानाधीनसन्न्यायप्रयोगद्वारा तथैव हेत्वाभासज्ञानाधीनपरोक्तहेतौ दोषोद्भावनेनापि जायते। अथ च "नाऽसङ्गतं प्रयुञ्जीत" इति नियमात् सद्धेतुनिरूपणे सङ्गतिद्वयं प्रदर्शितं, सङ्गतेः लक्षणं तावत् "अनन्तराऽभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम्" अत्र तु सद्धेतोः अनन्तरम् असद्धेतोः अभिधानं विद्यते, तदभिधानप्रयोजिका या जिज्ञासा "यदसद्धेतुस्तावत् किम्," तज्जिज्ञासोपशमनार्थं यत् वाक्यप्रयोगः भवति "अथ हेत्वाभासास्तत्त्व..." इत्यादिरिति तद्विषयत्वमसद्धेतौ विद्यते।

हेत्वाभासस्तावत् व्युत्पत्तिभेदेन दुष्टहेतुपरमथ च हेतुदोषपरञ्च भवति, तत्र हेतुवदाभासन्ते इति तु दूष्टहेतुपरं, हेतोः आभासाः हेत्वाभासाः इति तु हेतुदोषपरं हेत्वाभासपदम्, अतः हेत्वाभासपदं दुष्टदोषोभयपरं, तत्र दोषवैशिष्टयं हेतौ येन केनापि सम्बन्धेन।[2] तत्र न्यायसूत्रस्थानां हेत्वाभासानां विभागस्तावत् दूष्टानां न तु दोषानाम्।[3] वस्तुतः प्रायशः नव्यनैयायिकानां मते हेत्वाभासपदं दोषपरं तद्वैशिष्ट्यं हेतौ स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन। हेत्वाभासलक्षणं तावत् "यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वमिति।" तत्तु पञ्चविधं सव्यभिचारविरुद्धप्रकरण-समसाध्यसमातीतकाला इति पञ्चहेत्वाभासाः महर्षिगौतमेन प्रतिपादितम्।[4]

सव्यभिचारेष्वन्यतमेषु तृतीयहेत्वाभासमस्ति साध्यसमम्, साध्यसमासिद्धश्चानर्थान्तरमिति। तस्य लक्षणं तावत् न्यायसूत्रकारेणोक्तं यत् यो हेतुः साधनधर्मेणाऽविशिष्टत्वे सति साध्यसदृसः,[5] यो हेतुः

* शोधच्छात्रः, संस्कृतविभागाः, जवाहरलालनेहरुविश्वविद्यालयः, दिल्ली

1. "अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते।।"-*तत्त्वचिन्तामणि*
2. "एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन एतद्विशिष्टा हेतवो दुष्टहेतव इत्यर्थः।।*तर्कसंग्रहः;*न्यायबोधिनि पृ.स.११०
3. "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः।।"-*न्यायसूत्रः*, १.२.४
4. "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः।।"-*न्यायसूत्रः*, १.२.४
5. "साध्याविशिष्टः साध्यवत्साध्यसमः।।"-*न्यायसूत्रः*;१.२.८

साध्यसदृशः, अर्थात् पक्षे अनुमितेः पूर्वं सदैव साध्यः सन्दिग्धावस्थायां तिष्ठति तथैव यदि हेतोरपि सन्देहः सञ्जायते, तदा सन्दिग्धहेतुः साध्यसदृशं जायते, एवं न हि सन्दिग्धहेतुः साध्यसाधयितुं समर्थः। यतोहि हेतोः सन्दिग्धावस्थायां पक्षधर्मतैव[1] न भवति अतः नानुमितिः।

गौतमेन न्यायसूत्रे प्रोक्तं यत् साध्याऽविशिष्टः साध्यसमेत्यस्मिन् विशेषणांशोपादानेन स्वरूपासिद्धैकदेशाऽसिद्धाश्रयाऽसिद्धान्यथाऽसिद्धानां संग्रहो जायते। अत्रैका जिज्ञासा समुत्पद्यते यत् यथा साध्यसमहेतुः साध्यस्य व्याप्यो न भवति तथैव व्यभिचारमपि, अतः अवश्यक्लृप्तव्यभिचारेणैव गतार्थतत्वे साध्यसमो ह्यन्यथासिद्धः, तदोच्यते यत् व्यभिचारहेतौ साध्यनिरूपितव्याप्तिशून्यत्वं तु निश्चितं भवति अथ च साध्यसमहेतौ व्याप्तेः सन्देहो भवत्यमेवानयोः मध्ये भेदो विद्यते, एवं व्याप्तेः सन्देहादपि नानुमितिः।

मुक्तावलीकारेण असिद्धेः भेदत्रयं प्रतिपादितम्- आश्रयासिद्धिः, स्वरूपासिद्धिः, व्याप्यत्वासिद्धिभेदात्।[2] तत्र प्रथमं विद्यमानस्याश्रयासिद्धेः लक्षणं तावत् पक्षे पक्षतावच्छेदकाभावः यथा "काञ्चनमयपर्वतो वह्निमान् धूमादित्यत्र" पक्षे काञ्चनमयपर्वते पक्षतावच्छेदककाञ्चनमयत्वस्य अभावः विद्यते, अनया पक्षधर्मतायाः प्रतिबन्धः। आश्रयासिद्धेः निष्कृष्टलक्षणं तु "विषयतया ज्ञानस्य विशिष्टपक्षग्रहविरोधितावच्छेदकं रूपमाश्रयासिद्धिरिति"।

अत्र प्राचीननैयायिकाः वदन्ति यत् तद्वताबुद्धिं प्रति तद्भाववत्ताबुद्धिः यथा प्रतिबन्धकं भवति तथैव तद्भावव्याप्यवत्ताबुद्धिरपि प्रतिबन्धकं, यथा पक्षधर्मतायाः प्रतिबन्धकं पक्षे पक्षतावच्छेदकाभावः तथैव पक्षे पक्षतावच्छेदकविरहव्याप्यः एवं तद्वत्तबुद्धिं प्रति तद्धर्मात्यन्ताभावः यथा प्रतिबन्धकः तथैव धर्मिणोः भेदमपि एवं धर्मिणोः यत् भेद्व्याप्यवत्ताबुद्धिः तदपि प्रतिबन्धिकैव, पक्षतावच्छेदकविशिष्टज्ञानं प्रति पक्षे पक्षतावच्छेदकवदन्योन्याभावोपि प्रतिबन्धकः च पक्षे पक्षतावच्छेदक-वदन्योन्याभावव्याप्योपि प्रतिबन्धकमथ च विशिष्टबुद्धिघटीते विशेषणतावच्छेदके विशेषणतावच्छेदकतावच्छेदकाभावो प्रतिबन्धकमथ च विशेषणतावच्छेदकतवच्छेदकाभावव्याप्यवत्ताबुद्धिमपि प्रतिबन्धकं, तदा तु पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाऽभावः अथ च पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभावव्याप्यः, पक्षतावच्छेदकाऽभाववान्पक्षः, पक्षतावच्छेदकाऽभावव्याप्यवान्पक्षः, पक्षतावच्छेदकवदन्योन्याभाववान्पक्षः, पक्षतावच्छेदकवदन्योन्याभावव्याप्यवान्पक्षः, पक्षतावच्छेदकता-वच्छेदकाभाववत्पक्षतावच्छेदकम्, पक्षतावच्छेदकतावच्छेदकाऽभावव्याप्यवत्पक्षता-वच्छेदकम् पक्षतावच्छेदकतावच्छेदकवदन्योन्या-भाववत्पक्षतावच्छेदकम्, पक्षतावछेदकतावच्छेदकवदन्योन्याभावव्याप्यवत्पक्षतावच्छेदकमिति चतुर्दशविधज्ञानमपि प्रक्षधर्मतायाः प्रतिबन्धकं, तेन एतेषामपि आश्रयासिद्धयन्तर्गतत्वमेव प्रसज्येत, पक्षधर्मतायाः विरोधित्वात्।[3]

1. "व्याप्यस्य पर्वतादिवृतित्वं पक्षधर्मता।"-*तर्कसंग्रहः*पृ.स.,९५
2. "आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ, व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा।"
   -*न्यायसिद्धान्तमुक्तवलीः*, पृ.स., २८२
3. "इदन्त्वधातव्यं न केवलं पक्षतावच्छेदकाऽभावः आश्रयासिद्धिः, किन्तु...।"-*दीधितिः*, असिद्धप्रकरणम्

नव्यनैयायिकानां मते तु समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्वम्,[1] अतः पक्षतावच्छेदक-विशिष्टपक्षज्ञानं प्रति पक्षतावच्छेदकाभाववान्पक्षः, पक्षतावच्छेदकाभाव-व्याप्यवान्पक्षः, पक्षतावच्छेदकवदन्योन्याभाववान्पक्षः, पक्षतावच्छेदकवदन्योन्याभाव-व्याप्यवान्पक्षः एतेषामेव प्रतिबन्धकत्वम्, अतः एतेषां चतुर्णामेव आश्रयासिद्धित्वमायाति। पक्षे पक्षतावच्छेदकाऽभावेत्यादिनां तु अनुमितितत्करणाऽन्यतराऽप्रतिबन्धकतया हेत्वाभासत्वमेव तत्र नास्ति। आश्रयासिद्धेः निष्कृष्टलक्षणं भवति यत् "पक्षतावच्छेदकप्रकारकपक्षग्रहविरोधितावच्छेदकत्वमाश्रयासिद्धित्वम्"[2] अत्र पक्षतावच्छेदक-प्रकारकपक्षग्रहपदेन च पक्षतावच्छेदकवान् पक्षः इत्याकारकातिरिक्ताविषयकग्रहो ग्राह्यः तेन स्वरूपासिद्धिव्याप्यत्वासिद्ध्यादेरपि परामर्शात्मकपक्षतावच्छेदकप्रकारकग्रहविरोधितावच्छेदकत्वेऽपि नातिव्याप्तिः, पक्षतावच्छेदकांशे वा प्रतिबन्धकत्वं ग्राह्यम्।

असिद्धेः तृतीयभेदः स्वरूपासिद्धिरस्ति, तल्लक्षणं तु "पक्षे हेत्वभावः" स्वरूपासिद्धिः यथा "शब्दो नित्यः चाक्षुषत्वादित्यत्र" हेतुभूतस्य चाक्षुषत्वस्य शब्देऽभावात्, शब्दस्य श्रावणत्वात्,[3] अत्र प्राचीनाः वदन्ति यत् स्वरूपासिद्धिरपि साधनतावच्छेदकावच्छिन्नसाधनाभाववान्पक्षः, साधनताव-च्छेदकावच्छिन्नसाधनाऽभावव्याप्यवान् पक्षः, साध्यवदन्योन्याभाववान् पक्षः, तादृशाऽन्योन्याभावव्याप्यवान् पक्षः, पक्षे साधनतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावः, पक्षे तादृशसाधनाभावव्याप्यः, पक्षे साधनतावच्छेदकावच्छिन्नसाधनवदन्योन्याभाववान् पक्षः, पक्षे तादृशान्योन्याभावव्याप्यश्चेति क्रमेणाऽष्टविधा।[4]

नव्यानां मते तु समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्वेन साधनतावच्छेदकावच्छिन्नसाधनवान् पक्षेति ज्ञानं प्रति साधनतावच्छेदकावच्छेदकावच्छिन्नसाधनाभाववान् पक्षः, तादृश साधनाभावव्याप्यवान् पक्षः, तादृश साधनवदन्योन्याभाववान् पक्षः, तादृशसाधनवदन्योन्याभावव्याप्यवांश्च पक्षेति चतुर्विध ज्ञानमेव प्रतिबन्धकमतः तेषामेव स्वरूपासिद्धिः। प्राचीनाऽभ्युपगतानाम् अष्टविधानां प्रकाराणाम् अनुमितितत्करणाऽन्यतरप्रतिबन्धकत्वाभावेन हेत्वाभासत्वमेव निरस्यति।[5] स्वरूपासिद्धेः निष्कृष्टलक्षणं तावत् "पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकसाधनतावच्छेदकावच्छिन्नसाधनप्रकारग्रहविरोधितावच्छेदकत्वं स्वरूपासिद्धित्वम्।"

तेष्वन्यतमेषु तृतीयस्य व्याप्यत्वासिद्धेः लक्षणं तावत् साध्यव्याप्यतावच्छेदकरहितो हेतुः यथा "पर्वतो वह्निमान् काञ्चनमयधूमादिति", साध्यव्याप्यो काञ्चनमधूमः, साध्यव्याप्यतावच्छेदकं काञ्चनमयत्वमथ च धूमत्वं, धूमे धूमत्वसत्त्वेपि काञ्चनमयत्वस्य व्याप्यतावच्छेदकस्याभावात् काञ्चनमयधूमहेतुः व्याप्यत्वासिद्धः। एवं यदा हेतौ व्याप्यत्वासिद्धेः ज्ञानं भवाति तदा तु परामर्शस्य प्रतिबन्धः, यतोहि यदा धूमे काञ्चनमयत्वाभावज्ञानं सञ्जायते तदा तु "वह्निव्याप्यकाञ्चनमयधूमवानयं

1. "समानप्रकारकज्ञानस्यैव प्रतिबन्धकमिति वादिनां नव्यानां नये तु...।।"-*दीधितिः*, असिद्धप्रकरणम्
2. "सर्वसाधारणाश्रयासिद्ध्यनुगतलक्षणं तु पक्षतावच्छेदकप्रकारक...।।"-*दीधितिः*, असिद्धप्रकरणम्
3. "स्वरूपासिद्धो यथा शब्दो नित्यः चाक्षुषत्वात् रूपवदिति, अत्र चाक्षुषत्वं पक्षे नास्ति, शब्दस्य-श्रावणत्वात।।"-*तर्कसंग्रहः*;पृ.स.,११९
4. "एवं स्वरूपासिद्धिरपि नानाविधा साधनता...।।"-*दीधितिः*, असिद्धप्रकरणम्
5. "समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्ववादिनां नव्यानां नये तु...।।"-*दीधितिः*, असिद्धप्रकरणम्

पर्वतः" इति परामर्शस्य प्रतिबन्धः। अतः अनुमितिकारणप्रतिबन्धकत्वेन अस्य हेत्वाभासत्वमक्षतमेव।

प्राचीनमते "पर्वतो वह्निमान् नीलधूमादित्यत्र" नीलधूमत्वस्य गुरूधर्मतया व्याप्यतानवच्छेदकत्वं, यतोहि यदि लघुधर्मे अवच्छेदकत्वं सम्भवति चेत् तदा गुरूधर्मे नावच्छेदकत्वमतः[1] आचार्येनापि किरणावल्याम् ईश्वरसिद्धौ "क्षितिः सकर्तृका जन्यत्वात्" इत्यनुमानोदाहरणे सति पूर्वपक्षिणा सत्प्रतिपक्षमुदाहृतं यत् "क्षितिरकर्तृका अजन्यत्वात्", अनुमानेऽस्मिन् स्वरूपासिद्धिः विद्यते तद्वारणाय यदि अजन्यत्वहेतौ शरीरत्वविशेषणोपादानं क्रियते तदा स्वरूपासिद्धेः वारणेपि शरीरविशेषणस्य व्यर्थविशेषणतया व्याप्यत्वासिद्धिः प्रसज्येत्, अत एवोक्तं यत् "एकामसिद्धिं परिहरतोऽपि द्वितीयाऽपत्तिः"। हेतुतावच्छेदकाभाववद्गुरूधर्मः अनेन "वह्निव्याप्यनीलधूमवान्पर्वतः इति परामर्शस्य प्रतिबन्धो भवति। अत्र ग्राह्याभावावगाहितयैव प्रतिबन्धकं, वह्निनिरूपित नीलधूमत्वावच्छेदेन यन्नीलधूमनिष्ठ-व्याप्तिप्रकारकज्ञानस्यैवानुमितिकारणतया तज्ज्ञानं प्रति व्याप्तिविशिष्टधूमत्वावच्छेदेन व्याप्त्यभाव-वत्ताज्ञानरूपव्याप्यत्वासिद्धिज्ञानस्य प्रतिबन्धकमतः तस्य हेत्वाभासत्वं भवति।

नव्याः- यदा नीलधूमे व्याप्तिः विद्यते तदा न व्याप्यत्वासिद्धिरिति, एवं प्राचीनमतानुसारेण व्याप्तिसत्वेपि नीलधूमत्वस्याऽनवच्छेदकतया व्याप्यत्वाऽसिद्धिरिति, तन्नोच्चितं यतोहि अनतिरिक्तवृत्तित्वरूपस्याऽवच्छेदकत्वं नीलधूमत्वेऽपि विद्यते, अथ चेदमपि न वक्तुं शक्यते यत् नीलधूमत्वे स्वरूपसम्बन्धरूपावच्छेदकत्वस्याऽसत्वात्, यदि स्वरूपसम्बन्धरूपाच्छेदकत्वं स्वीकृयते तदा तु "पिण्डोऽयं पशुमान् सास्नादिमतः" इत्यत्रापि व्याप्यत्वासिद्ध्यापत्तिः। यतोहि सास्नाऽपेक्षया गोत्वस्य लधुत्वेन सास्नादेः स्वरूपसम्बन्धरूपावच्छेदकत्वाभावात्, अतः व्यर्थविशेषणस्थले न व्याप्यत्वासिद्धेर्हेत्वाभासः, अपितु अवश्यक्लृप्त अधिकोक्तिनामके निग्रहस्थानेऽन्तर्भावः सञ्जायते।

अत्र व्याप्यत्वासिद्धस्तूपलक्षणं, तेन व्यापकत्वाऽसिद्धेरपि ग्रहणं यथा "पर्वतो उष्णवह्निमान् धूमादित्यत्र" साध्यतावच्छेदके व्याप्तिनिरूपकतावच्छेदकाभावः तदा उष्णवह्नौ व्याप्तेः निरूपकत्वमस्ति, निरूपकतावच्छेदकं वह्नित्वं न तु उष्णत्वं, तेन उष्णवह्निघटितपरामर्शस्य प्रतिबन्धः भवति। एतेनैव साध्याप्रसिद्धेः साधनाप्रसिद्धेश्च नातिरिक्तकल्पनमपितु व्याप्यत्वासिद्धिमध्येऽवान्तर्भावः। तत्र साध्याप्रसिद्धिरित्यत्रादिपदेन सम्बन्धाप्रसिद्धिप्रतियोगित्वाप्रसिद्धि-ज्ञानाप्रसिद्ध्यादिभेदानामपि असिद्धा-वेवान्तर्भावः। वार्तिककारमते तु स्वरूपासिद्धेरपि अत्रैवान्तर्भावः।[2]

तत्र व्याप्यत्वासिद्धेः भेदद्वयमस्ति, एकः व्याप्तिग्राहकप्रमाणाभावमात्रात् अपरस्तूपाधिसद्भावात् व्याप्यत्वासिद्धेः यत् प्रथमं भेदमस्ति तदूदाहरणं तावत् "यत् सत् तत्क्षणिकं यथा प्रदीपादिकम्" अस्मिन्ननुमाने व्याप्तेः ग्राहकं किमपि प्रमाणं नास्ति अतः अयं हेतुः व्याप्यत्वासिद्धिः।

सोपाधिको यथा "क्रत्वन्तर्वर्तिनी हिंसा अधर्मजनिका हिंसात्वात् क्रतुबाह्यहिंसावत्" अनुमानेऽस्मिन् निषिद्धत्वमुपाधिः विद्यते, यत्र यत्र अधर्मजनकत्वं तत्र तत्र निषिद्धत्वमिति साध्यव्यापकत्वम्, यत्र च

1. "सम्भवति लघुधर्मे गुरौ तदभावात्।।"-
2. "तदनेन स्वरूपासिद्धैकदेशासिद्धाश्रयासिद्धान्यथासिद्धानां सङ्ग्रहः, तेषामसिद्धत्वेन साध्याविशिष्टत्वात।।" *-न्यायवार्तिकः*, पृ.स.३४४
3. "यद्वा व्याप्तिर्हि...।।"-*गौतमवृत्तिः*, १.२.८

हिंसात्वमस्ति यागादौ तत्र निषिद्धत्वं नास्त्यतः साधनाव्यापकत्वमिति उपाधौ आयात्यतः निषिद्धत्वमुपाधिः, उपाधिविशिष्टो हेतुः व्याप्यत्वासिद्धः।

व्याप्यत्वासिद्धोऽपि द्विविधः साध्येनाऽसहचरितः सोपाधिकसाध्यसम्बद्धश्च, सोपाधिके व्याप्यत्वासिद्धशब्दस्य समन्वयः क्रियते, व्याप्यत्वस्यासिद्धिर्यस्मात् इति व्युत्पत्योपाधिरेव व्याप्यत्वासिद्धिस्तद्वान इति। सोपाधिकसाध्यसम्बद्धो हेतुश्च अनैकान्तिकोऽपि इति तु मतान्तरम्। साध्येन सहचरितस्तु यत्सत् तत्क्षणिकं यथा घनः संश्च विवादास्मदीभूतः शब्दादिकं, अनुमानाकारस्तु "शब्दः क्षणिकः सत्वात्", अत्र सत्त्वहेतौ क्षणिकत्वनिरूपितव्याप्तिः न हि केनापि प्रमाणेन ज्ञातुं शक्यते।

द्वितीयस्तु सोपाधिकसाध्यसंबद्धः यथा "स श्यामो मित्रातनयत्वात्" अत्र शाकपाकजन्यत्वमुपाधिः, अत्र श्यामत्वप्रयोजकं न हि मित्रातनयत्वमपितु शाकपाकजन्यत्वमेव, अतः मैत्रातनयत्वस्य श्यामत्वेन सम्बन्धे शाकाद्याहारपरिणामोपाधिः।

प्राचीनाः "साध्यसम्बन्धितावच्छेदकत्वरूपव्याप्तेः" स्वरूपं स्वीक्रियते, तदा तु "पर्वतो वह्निमान् नीलधूमादित्यत्र" साध्यसम्बन्धितावच्छेदकं न हि नीलधूमत्वमतः नात्र व्याप्तिः सम्भवति।[16] अत एव सर्वत्रैव गुरूधर्मस्य हेतुतावच्छेदकत्वस्थले "पशुमान् सास्नादिमतः" इत्यत्रापि प्राचीनैर्व्याप्यत्वासिद्धिर्नाङ्गीक्रियते, अपितु स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितस्थल एवेति। नव्याः मतमेतन्नाङ्गीक्रियते यतोहि व्यर्थविशेषणस्थले न व्याप्यत्वासिद्धिर्हेत्वाभासः पुरुषस्त्वधिकेन निगृह्यते।

यदि उपाधेः प्रयोजनमेव व्यभिचारः स्यात् तदा तु सर्वत्रैव उपाधिसत्वे व्यभिचारस्त्वश्यमेव स्यात् तदा किमर्थ व्याप्यत्वासिद्धिः स्वीकृयते, तदोच्यते यत् धूमाभाववद्वृत्तित्वाभावाभावत्वेन व्याप्यत्वासिद्धित्वमथ च व्यभिचारस्तु धूमाभावद्वृतित्वेन इति भेदमस्ति।

भासर्वज्ञप्रणीते न्यायसारे हेत्वाभासविचारणावसरे हेत्वाभासानां क्रमस्तु सूत्रकारापेक्षया असिद्ध-विरुद्ध-अनैकान्तिक-अनध्यवसित-कालात्ययापदिष्ट-प्रकरणसमाः इति भिन्नक्रमेण प्रतिपाद्य तल्लक्षणं विहितं यत् "अनिश्चित्पक्षवृत्तिरसिद्धः", इत्थं लक्षणं प्रतिपाद्य असिद्धस्य द्वादशविधत्वं प्रतिपादितम्। वस्तुतस्तु तेषां द्वादशविधानां भेदानामन्तर्भावः असिद्धेः प्रसिद्धभेदत्रयेवाऽन्तर्भावः कर्तुं शक्यते। अतः भेदत्रयैव व्याप्यत्वासिद्धिरिति दिक्।

## सन्दर्भग्रन्थसूची

1. *तर्कसंग्रहः* (न्यायबोधिनिसहितम्). भट्टः अन्नम्.वाराणसीः. चौखम्भासंस्कृतसंस्थानम्, २००५
2. *तत्त्वचिन्तामणिः* उपाध्यायः गंगेशः. कलकत्ता. एशियाटिकसोसायटिओफबंगालः, १९१२
3. *न्यायसूत्रः* गौतमः भाष्यवार्तिकटीकापरिशुद्धि सहितम् अनन्तलालठक्कुरेण सम्पादितम् मिथिलाविद्यापीठग्रन्थमालातः,१९६७
4. *न्यायसारः* भासर्वज्ञः. मुम्बईः. निर्णयसागर प्रेसः, १९१०
5. *न्यायसिद्धान्तमुक्तावलिः* (श्री कृष्णवल्लभाचार्य-कृत-किरणावलीसहितम्).पंचाननविश्वनाथः. वाराणसीः.
6. चौखम्भासंस्कृतसंस्थानम्, १९९५.
7. सामन्यनिरुक्तिः. उपाध्यायः गंगेशः. वाराणसीः. चौखम्भासंस्कृतसंस्थानम्, १९९८
8. झल्कीकरः भीमाचार्यः. न्यायकोशः. मुम्बइतः. निर्णयसागरप्रेसः. प्राच्यविद्यासंशोधनमन्दिरम्, १९२८

ISSN - 0974-8946
अप्रैल-जून, 2019

शोधप्रभा
वर्षः 44, द्वितीयोऽङ्कः

# सूत्रभेदविमर्शः

प्रज्ञा*

पाणिनीयं हि व्याकरणं सूत्रात्मकं विद्यते। पूर्वमासीदाचार्याणां काचित् शैली अल्पैः शब्दैः अधिकज्ञापनस्य। एषा एव शैली सूत्रशैलीत्युच्यते। महेश्वरप्रसादात् लब्धम् अक्षरसमाम्नायं शिवसूत्रजालं वा आधारीकृत्य महर्षिणा पाणिनिनासूत्रात्मकस्य व्याकरणस्यास्य समारम्भः कृतः। तत्र हि प्रमाणम्–

**येनाक्षरसमाम्नायम् अधिगम्य महेश्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥[1]**

अतः वक्तुं शक्यते पाणिनीयव्याकरणस्य समारम्भः माहेश्वरसूत्रैः भवति। तच्च शिवसूत्रजालं कथं लब्धम् इत्येतस्मिन् विषये नन्दिकेश्वरकृतकाशिकायाम् उक्तम्–

**नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।**
**उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥[2]**

तानि च माहेश्वरसूत्राणि व्याकरणस्यास्य प्राणतत्त्वं भवन्ति। यतोहि ततः प्रत्याहारनिर्माणेन संजायते सर्वाऽपि शब्दप्रक्रिया। पुनः चतुःसहस्रेसु सूत्रेषु सम्पूर्णस्य संस्कृतवाङ्मयस्य साधुशब्दप्रक्रियायाः समावेशोऽपि सूत्रशैल्या एव सम्भवति। एतदेव चास्ति वैशिष्ट्यं व्याकरणस्यास्य।

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इत्यस्ति मानवस्वभावः कश्चन। अतः लेखस्यास्य किं प्रयोजनं किं वा उद्देश्यम् इति जिज्ञासायै तेषाम् स्पष्टोल्लेखः क्रियते।

## लेखस्य सामान्योद्देश्यानि

1. सूत्रशैल्याः स्वरूपविज्ञानं महत्त्वविज्ञानञ्च।
2. व्याकरणशास्त्रसन्दर्भे सूत्रशब्दार्थविज्ञानम्।
3. प्रकृतशास्त्रीयसूत्रस्वरूपस्य स्पष्टप्रतिपत्तिः।
4. षड्विधानां सूत्राणां लक्षणोदाहरणविज्ञानेन स्पष्टपरिज्ञानम्।
5. अष्टाध्याय्यां विद्यमानानां सूत्राणां भेदपरिज्ञानाय सामर्थ्योत्पादनम्।

---

* शोधच्छात्रा, नव्यव्याकरणविभागे, राष्ट्रियसंस्कृतसंस्थानम्, भोपालपरिसरः, भोपालम्, म.प्र.

1. मू.–पा.शि.57 (उद्धृत–ल.श.शे.,श्रीब्रहदत्तद्विवेदि–पृ.20)
2. मू.–नन्दिकेश्वरकृतकाशिका(उद्धृत–ल.श.शे.,श्रीब्रह्मदत्तद्विवेदि–पृ.23)

सूत्रशैलीं परिज्ञातुम्, व्याकरणस्य संश्लिष्टां सूत्रव्यवस्थां चावगन्तुं सूत्रप्रकाराणाम् अवगमः आवश्यकत्वं भजते। एतेषाम् उद्देश्यानां संपूर्तये क्रमशः विषययोजना क्रियते।

**(क) सूत्रशब्दस्यार्थः**

सूत्रशब्दस्य बहवः अर्थाः भवितुमर्हन्ति भिन्नेषु सन्दर्भेषु। तद्यथा – (1)वस्त्रसन्धाने तन्तौ (2)व्यवस्थायाम् (3)नाटकोपकरणे प्रस्तावे (4)शास्त्रवाक्यभेदे च।

अत्र हि व्याकरणशास्त्रे अर्थद्वयं सूत्रस्य सम्भवति – व्यवस्थायां शास्त्रवाक्यभेदे च। सर्वं व्यवस्थितं कर्तुं भवति सूत्रस्य महती आवश्यकता। यथा पाणिनीयेऽस्मिन् व्याकरणे प्रत्याहारनिर्माणं माहेश्वरसूत्रेभ्यः कृतम्। तेन व्यवस्थितं भवति यत् "अच्" इति कथनेन सर्वत्र शास्त्रे "अ,इ,उ,ऋ,लृ,ए,ओ,ऐ,औ" इत्येतेषामेव वर्णानां बोधः भविष्यति नान्येषाम्। न केवलं प्रत्याहाराः एव, शास्त्रव्यवस्थायै बहुविधं वाक्यमपि उक्तमस्ति अत्र शास्त्रे। तद्यथा "सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र" इत्येष नियमः कृतः वर्तते येन लघुना सूत्रस्वरूपेण अधिकं ज्ञापितं भवति। यथा- "हलन्त्यम्"[3] इति सूत्रमस्ति। ततः पूर्वम् "उपदेशेऽजनुनासिक इत्"[4] इति सूत्रं विद्यते। ततः "उपदेशे इत्" इत्यनयोः पदयोः अनुवृत्तिः आयाति। तेन चार्थः निष्पद्यते "उपदेशे अन्त्यं हलित् स्यात्" इति।

शास्त्रव्यवस्थां समीचीनां सुस्थिरां च कर्तुमेव षड्विधसूत्राणामपि विभागः कृतः। तत्र हि संज्ञासूत्राणां परिभाषासूत्राणाम् अधिकारसूत्राणां च महत्त्वं शास्त्रव्यवस्थायै सुतरां भवति। एवं प्रकारेण व्यवस्थायै आचरितं यद्यद् तदर्थं सूत्रशब्दस्य प्रयोगः भवितुम् अर्हति।

किन्तु अत्र शास्त्रे "शास्त्रवाक्यभेदे" एव प्रायः सूत्रशब्दस्य प्रयोगः कृतः विद्यते।

**(ख) सूत्रस्वरूपम्**

तस्य च सूत्रस्य स्वरूपं कीदृशम् इति व्याख्यातुम् आचार्यैः बहुविधं सूत्रलक्षणं समुद्धृतम्। तद्यथा –

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥[5]**

श्लोकेऽस्मिन् सूत्रस्य षड् लक्षणानि समुपवर्णितानि सन्ति। सूत्रं हि–

1. अल्पाक्षरम्
2. असन्दिग्धम्
3. सारवद्

1. पा.सू.1.3.3
2. पा.सू.1.3.2
3 सि.कौ.खण्ड-1,गोपालदत्तपाण्डेयः(परिशिष्टम्, पृ. 821)

4. विश्वतोमुखम्
5. अस्तोभम्
6. अनवद्यं च भवति।

**1) अल्पाक्षरम्**

**अल्पानि**–अक्षराणि यस्मिन् तत् अल्पाक्षरम्। संक्षिप्तस्वरूपेणापि बह्वर्थबोधकत्वात् समकार्यत्वात् च सूत्रत्वम्। तद्यथा- "आद्गुणः"[1] इति सूत्रमस्ति। यद्यपि अत्र "आत्, गुणः" इति पदद्वयमेव वर्तते तथापि शास्त्रव्यवस्थानुसारणेन बहुविधम् अर्थं ज्ञापयति। तद्धि–

| पूर्वशब्दस्यान्तिमः वर्णः | परशब्दस्यादिवर्णः | एकादेशः |
|---|---|---|
| अ | इ | ए |
| अ | उ | ओ |
| अ | ऋ | अ |
| अ | लृ | अल् |

**2) असन्दिग्धम्**–

न सन्दिग्धम् असन्दिग्धम्। अर्थात् यत्र संदेहः न भवति तत् सूत्रम् उच्यते। एतदपि सूत्रस्य एकं लक्षणं भवति। किन्तु असन्दिग्धबोधाय सूत्रान्तराणाम्, तैः सहसम्बन्धविचारः च अपेक्ष्यते। यथा– "आद्गुणः" इति सूत्रस्य असन्दिग्धबोधः तदा एव भवितुमर्हति यदा "अकः सवर्णे दीर्घः"[2], "वृद्धिरेचि"[3] इत्यनयोः अर्थबोधः स्यात्। पुनश्च तदाधारेण "आद्गुणः" इत्यस्य कार्यक्षेत्रे संकोचेन "एजतिरिक्तं सवर्णाजतिरिक्तं च अजव्यवहितपूर्वत्वविशिष्टः यदा अकारः तदा उभयोः स्थाने गुणः एकादेशः" इत्यसन्दिग्धबोधः उत्पद्यते। ततः परं सन्देहः न भवति, सवर्णाच्विषये अस्य प्रवृत्तिः किमर्थं न, एच्विषये चास्य प्रवृत्तिः किमर्थं न; यद्यपि एच्-प्रत्याहारोऽपि अच्-प्रत्याहारे एवान्तर्भवति इति।

**3) सारवत्**–सारः अस्य अस्मिन् अस्तीति सारवत्। सूत्रं सारवद्भवति। अर्थात् सूत्रे एव सर्वविधव्याख्या सुसमाहिता भवति। वृत्तिवार्तिकादिकं तु केवलं बालानां सुखबोधाय कृतमाचार्यैः। तदुक्तम्–

> सूत्रेष्वेव हि तत् सर्वमुद्धृतं यच्च वार्तिके।
> सूत्रं योनिरिहार्थानां सूत्रे सर्वं प्रतिष्ठितम्॥[4]

1. पा.सू.6.1.86
2. पा.सू.6.1.99
3. पा.सू.6.1.87
4. मू.तन्त्रवार्तिकम् 2.3.11(उद्धृतम्–उत्सर्गापवादमीमांसा,प्रो.लक्ष्मी शर्मा;पृ.36)

**4 ) विश्वतोमुखम्–** विश्वतः (सर्वतः) मुखं यस्य तत् विश्वतोमुखम्। सूत्रं विश्वतोमुखं भवति। तस्य न तादृशी कापि सीमा भवति स्वीयं कार्यक्षेत्रं विहाय। सूत्रं सर्वत्र स्वीयं कार्यं सम्पादयितुं सिद्धं भवति, सर्वथैव च स्वीयं कार्यक्षेत्रं पश्यत् भवति। यथैव हि तस्य प्रवृत्तिस्थलं दृश्यते, अचिरमेव तत्र सूत्रप्रवृत्तिः जायते। यथा- सवर्णाचोः यदैव हि संयोगः "अकः सवर्णे दीर्घः" प्रवर्तत एव। एवं प्रकारेण सूत्रं विश्वतोमुखं भवति, सर्वदैव स्वीयं कार्यं कर्तुं सिद्धं भवतीति।

**5 ) अस्तोभम्–**नास्ति स्तोभः (रोधः) यस्मिन् तत् अस्तोभम्स्तोभः = निरादरः, तिरस्कारः[1]। सूत्रम् अस्तोभं भवति अतिरस्कार्यं समादरयोग्यं च भवति। यतः साक्षात् महेश्वरादागतानि सन्ति। अपि च महता प्रयत्नेन ऋषितुल्यैः आचार्यैः सुविचिन्त्य कृतानि सन्ति। उक्तञ्च महाभाष्ये महर्षिणा पतञ्जलिना– "प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्रङ्मुख उपविश्य सूत्राणि प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरीयता सूत्रेण"[2]। अपि चोक्तम्- "सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्।"[3]

**6 ) अनवद्यम्–** न अवद्यम् इति अनवद्यम्। अवद्यम्=त्याज्यम्, निन्द्यम्[4] । सूत्रं न तु त्याज्यं भवति न च निन्द्यम् इत्यर्थः। केषाञ्चन सूत्राणां दृष्टं प्रयोजनं केषाञ्चनादृष्टं प्रयोजनं च विद्यते, न किमपि सर्वथा अनर्थकं भवतीति। यथोक्तं श्रीनागेशेनाऽपि–"किञ्चिद् दृष्टादृष्टार्थवत्, किञ्चिच्छुद्धादृष्टार्थवत्, सर्वथाऽनर्थकं न किञ्चिदिति"[5]। अपि चोक्तं महर्षिणा पतञ्जलिना– "सोऽयमक्षरसमाम्नायो वाक्यसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते।"[6] अक्षरसमाम्नायं चाधिकृत्य रचितानि सूत्राणि अपि तथाभूतानि एव। अतः न अवद्यं सर्वथैव पारायणयोग्यं समादरयोग्यं च भवतीति। एकं भिन्नमपि सूत्रलक्षणं सम्प्राप्यत एतादृशमेव उपर्युक्तलक्षणसदृशम्। तच्च–

> **लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।**
> **सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः।।**[7]

**( ग ) सूत्रभेदाः**–महर्षिपाणिनिना विरचितानां सूत्राणां संकलितं स्वरूपं भवति अष्टाध्यायीति। अष्टाध्याय्याम् आहत्य "3,978" सूत्राणि वर्तन्ते। शब्दप्रक्रियायाः समुचितव्यवस्थायै कार्यस्य प्रकृत्याधारेण अस्मिन् व्याकरणशास्त्रे सूत्राणां षड्भेदाः अङ्गीकृताः सन्ति। तद्यथा- सञ्ज्ञासूत्रम्, परिभाषासूत्रम्, विधिसूत्रम्, नियमसूत्रम्, अतिदेशसूत्रम्, अधिकारसूत्रञ्चेति। यथोक्तम्–

---

1. वामन-शिवराम-आप्टे, संस्कृत-हिन्दी-शब्दकोशः
2. म.भा.आ.3.पृ.160
3. म.भा. 'इको यणचि'(6.1.77),उद्धृत- ल.श.शे.पृ.21
4. वामन-शिवराम-आप्टे, संस्कृत-हिन्दी-शब्दकोशः
5. ल.श.शे.पृ-22
6. म.भा.आ.2.पृ.147
7. विष्णुधर्मोत्तरपुराणम्, खण्ड.3,अ.5,श्लो.1(उद्धृतम्-उत्सर्गापवादमीमांसा,प्रो.लक्ष्मी शर्मा;पृ.37)

**सञ्ज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्।।**[1]

षड्विधमपि सूत्रं पाणिनीयाष्टके रचितं वर्तते। किन्तु भेददृष्ट्या नैकत्र संकलनं तेषाम्। तानि इतस्ततः विकीर्णानि सन्ति। अतः षड्विधानां सूत्राणां परिज्ञानाय एतेषां लक्षणविचारः क्रियते। येन वयं षड्विधमपि सूत्रं पृथक् पृथक् कर्तुं शक्ष्यामः। निषेधसूत्राणां न कुत्रापि अन्तर्भावः भवितुम् अर्हति अतः सूत्रस्य सप्तमः भेदः अङ्गीकरणीयः इति एकः पक्षः। द्वितीयः एष अपि पक्षः भवितुम् अर्हति यत् यस्य निषेधः कृतः तस्य यत् स्वरूपं तदेव निषेधसूत्रस्यापि। अतः न भिन्नः सूत्रप्रकारः अङ्गीकरणीयः इत्यपरः पक्षः।

**(1) सञ्ज्ञासूत्रम्**–'सम्' इत्युपसर्गपूर्वक-'ज्ञा'धातोः भावे अङ्प्रत्यये ततः टाप्-प्रत्यये कृते सति सञ्ज्ञेति शब्दः निष्पद्यते। अस्य व्युत्पत्तिलभ्योऽर्थः भवति 'सञ्ज्ञायते अनया इति सञ्ज्ञा'। अर्थात् तादृशः शब्दः येन कस्यापि पदार्थस्य स्वरूपबोधः भवति सा सञ्ज्ञा इति वक्तुं शक्यते सामान्येन। सञ्ज्ञासूत्रस्य लक्षणं कुर्वद्भिः आचार्यैः उक्तं वर्तते "सञ्ज्ञासञ्ज्ञिप्रत्यायकं सूत्रं संज्ञासूत्रम्"[2] इति। अथवा "शक्तिग्राहकत्वं संज्ञासूत्रत्वम्"। केषाञ्चन मतमत्र विद्यते यत् "साक्षात् शक्तिग्राहकत्वं सञ्ज्ञासूत्रत्वम्" किन्तु नैतद्युक्तं प्रतिभाति, यतोहि एवं स्वीकारे 'अ इ उ ण्' इत्यादीनां माहेश्वरसूत्राणां पुनश्च 'स्वौजसमौट्...[4]' इत्यादीनां सूत्राणाञ्च सञ्ज्ञासूत्रत्वं नाऽभविष्यत्।[5] यतोहि "अ इ उ ण् ..." इत्यादि सूत्रम् इव अस्य सूत्रस्याऽपि 'आदिरन्त्येन सहेता' इत्यनेन एकवाक्यतया शक्तिग्राहकत्वेन संज्ञासूत्रत्वम्। यथा –'वृद्धिरादैच्' 'अदेङ्गुणः' इत्यादयः। अत्र वृद्धिगुणौ सञ्ज्ञे स्तः 'अदेङ्' 'आदैच्' च सञ्ज्ञिनौ। यतः एते सूत्रे सञ्ज्ञासञ्ज्ञिप्रत्यायकौ स्तः अतः सञ्ज्ञासूत्रे स्तः।

**(2) परिभाषासूत्रम्** "अनियमे नियमकारिणी परिभाषा"[6] इति परिभाषासूत्राणां सामान्यं लक्षणं बहुत्र चर्चितम्। अर्थाद् अव्यवस्थायां सत्यां यत् सूत्रं व्यवस्थां करोति तत् परिभाषासूत्रं भवति। महर्षिणा पतञ्जलिना यद्यपि स्पष्टतया परिभाषायाः लक्षणं नोक्तं तथापि तेभ्यः कृतेन वर्णनेन अवगम्यते यत् ते परिभाषाम् एकं प्रकाशकं तत्त्वं मन्वते। यस्यालोके सूत्रार्थः सुस्पष्टः भवति। किन्तु एवं स्वीकारे अधिकारपरिभाषयोः ऐक्यस्य संशयः समुदेति। संशयमेनं निवारयितुं भगवान् भाष्यकारः द्वयो अन्तरं प्रतिपादयन् ब्रवीति "कः पुनरधिकारपरिभाषयोर्विशेषः? अधिकारः प्रतियोगं तस्य निर्देशार्थ इति योगे योगे उपतिष्ठते। परिभाषा पुनरेकदेशस्था सती कृत्स्नं शास्त्रमभिज्वलयति प्रदीपवत्

---

1. ल.श.शे.,पृ.12(राधिका–श्रीब्रह्मदत्तद्विवेदि)
2. कौ(गो.द.पा.).खण्ड–1.परिशिष्टम्, पृ.821
3. ल.श.शे.–राधिका,पृ.13
4. पा.सू.4.1.2
5. पा.सू.1.1.71
6. कौ(गो.द.पा.).खण्ड–1.परिशिष्टम्, पृ.821

तद्यथा- प्रदीप: सुप्रज्वलित: एकदेशस्थ: सर्वं वेश्माभिज्वलयति।" मुख्यतया परिभाषाया: एकमेव कार्यं भवति शब्दशास्त्रस्यानियमितताया: दूरीकरणम्। अस्या: अनियमितताया: भेदकारणेन परिभाषाया: अपि कार्याणि बहुविधानि भवन्ति। काश्चन परिभाषा: सूत्रेषु आवश्यक[1] पदम् उपस्थापयन्ति। येन सूत्राणाम् अल्पाक्षरत्वं रक्षितं भवति। यथा- 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'तस्मादित्युत्तरस्य' [2]इत्यादय: परिभाषा: पदविशेषस्य उपस्थितिं कारयन्ति। एतानि सूत्राणि न केवलं सूत्राणां लघुतां रक्षति अपितु तेषां लक्ष्येषु प्रवृत्तिम् अलक्ष्याभ्यां निवृत्तिञ्चापि कारयन्ति। यथा- 'इको गुणवृद्धी' इति परिभाषा गुणवृद्धिविधानाय लक्ष्यरूपेण इक: निर्धारणं करोति। वस्तुत: विधिसूत्राणां प्रवृत्तौ सर्वविधदोषवारणाय एव परिभाषाशास्त्राणां निर्माणं कृतम् आचार्येण पाणिनिना।

**(3) विधिसूत्रम्**– "आदेशविधायकं सूत्रं विधिसूत्रम्"[3] इत्युच्यते। व्याकरणशास्त्रस्य प्रक्रियापक्षस्य प्राणभूतं भवति विधिसूत्रम्। शब्दप्रक्रियाज्ञापनाय विधिसूत्राणि एव आधारभूतानि भवन्ति। यतोहि एकैकं शब्दं निष्पादयितुं बहुविध: आदेश: करणीय: भवति। एतेषां विधिसूत्राणाम् उपकाराय एव अन्यसूत्रप्रकारा: वर्तन्ते इति अस्माभि: वक्तुं शक्यते। विधिसूत्राणां च असन्दिग्धबोधेनैव शास्त्रप्रक्रियाया: प्रवृत्ति: विभिन्नेषु स्थलेषु भवति। तादृशाय बोधाय एव अन्येऽपि सूत्रभेदा: विधिसूत्रस्य साहाय्यं कुर्वन्ति। पाणिनीयाष्टके प्राय: विधिसूत्राणामेव बाहुल्यं दृश्यते। इमानि च सूत्राणि द्विविधानि भवन्तीति सामान्येन भेद: प्रकल्पयितुं शक्यते। तद्यथा–

1. उत्सर्गविधि:
2. अपवादविधि: च।

उदुपसर्गपूर्वकात् सृज्धातो: कर्मणि घञ्-प्रत्यये कृते सति उत्सर्गशब्द: निष्पद्यते। "सामान्यविधाने" अर्थे अत्र उत्सर्गशब्दस्य प्रयोग:। "उपोद्यते सामान्यशास्त्रं स्वविषयात् सङ्कोच्यते अनेन" इति करणे घञ्-प्रत्यय:। विशेषशास्त्रम् इत्यर्थ:। अयं भाव: यदा कार्यस्य विधानं विशेषरूपेण क्रियते, उत्सर्गस्य कार्यक्षेत्रे संकोच: वा क्रियते तदा स विधि: अपवाद: इत्युच्यते। उत्सर्गविधिरपि अपवादस्य क्षेत्रं परित्यज्य एव प्रवर्तते। अनयो: उत्सर्गापवादयो: प्रवर्तनक्रम: लक्ष्यैकचक्षुष्काणां लक्षणैकचक्षुष्काणां च कृते भिन्न: भिन्न: भवति। लक्षणैकचक्षुष्काणां कृते "पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गा:"[4] इति नियम: भवति। अर्थात् पूर्वम् अपवादा: बुद्ध्यारूढा भवन्ति पश्चादुत्सर्गा:। लक्ष्यैकचक्षुष्काणां तु "प्रकल्प्य चापवादविषयं तत उत्सर्ग: प्रवर्तते"[7] इति। प्रकल्प्य इत्यस्य हि परित्यज्य इत्यर्थ:।

1. म.भा.सू.2.1.1
2. पा.सू.1.1.66
3. पा.सू.1.1.67
4. पा.सू.1.1.3
5. कौ(गो.द.पा.).खण्ड-1.परिशिष्टम्, पृ.821
6. ल.श.शे.,पृ.-43(श्रीब्रह्मदत्तद्विवेदि)
7. ल.श.शे.,पृ.-45(श्रीब्रह्मदत्तद्विवेदि)

यथा- 'हलन्त्यम्'[1] इति सामान्यम् उत्सर्गशास्त्रं भवति। तस्य च अपवादः 'न विभक्तौ तुसमाः'[31] इति। अष्टाध्याय्यां प्रायः उत्सर्गापवादयोः क्रमः सहैव भवति।

## (4) नियमसूत्रम्–

"प्राप्तस्य विधेः नियामकं सूत्रं नियमसूत्रम्"[2]। विधिसूत्रस्य स्वच्छन्दप्रवृत्तिम् अवरोधयितुं क्षेत्रं च तस्य संकोचयितुं प्रवर्तते। विधिसूत्रस्य सीमानिर्धारणम् अतिप्रसङ्गादिदूरीकरणं चास्य कार्यम्। इदानीं संशयः भवति यत् नियमसूत्रमपि विधिसूत्राणां क्षेत्रे संकोचं करोति अपवादसूत्रमपि तथैव विदधाति, द्वयोः भेदः कः तर्हि? तत्रोच्यते अपवादसूत्रं तु विधिसूत्रस्य क्षेत्रात् किञ्चित् क्षेत्रमादाय तत्र स्वयं भिन्नं विदधाति, किन्तु नियमसूत्रेण न किमपि भिन्नं विधीयते। अनेन केवलं विधिसूत्रस्य प्रवृत्तिः अवरुध्यते। विधानं तु विधिसूत्रस्यैव कार्यं तदाऽपि।

नियमसूत्रमपि द्विविधम् इति सामान्येन वक्तुं शक्यते। तथा हि –

1. विधेयात्मकं नियमसूत्रम्
2. निषेधात्मकं नियमसूत्रम्

## (5) अतिदेशसूत्रम्–

अति-उपसर्गपूर्वकात् दिश्म्-धातोः भावे घञ्-प्रत्यये कृते सति अतिदेशशब्दः निष्पद्यते। "अन्यधर्मस्यान्यत्र आरोपणम्"[3] अतिदेशः अथवा अन्यतुल्यत्वस्य विधानम् अतिदेशः"। अतिदेशसूत्राणि विधिसूत्राणां क्षेत्रस्य विस्तारं करोति। सादृश्यस्य बौद्धिकारोपेण अतिदेशसूत्राणि शास्त्रप्रक्रियाम् अग्रे सारयन्ति। यथा 'आद्यन्तवदेकस्मिन्'[4] इति सूत्रमस्ति। अनेन सूत्रेण एकस्मिन् असहायेऽपि यथायोग्यम् आदिवद्भावस्य अन्तवद्भावस्य च अतिदेशः क्रियते। तेन केवलम् अकारेऽपि अकारादित्वव्यवहारः अकारान्तत्वव्यवहारः वा भवितुम् अर्हति। वस्तुतः तत्र आदित्वम् अन्तता वा नास्ति यतोहि 'यस्मात्पूर्वं नास्ति परमस्ति स आदिः[6], 'यस्मात्परं नास्ति पूर्वमस्ति सोऽन्तः' [7]इति। तथापि अनेन सूत्रेण आद्यन्तधर्मयोः बौद्धिकारोपेण शास्त्रप्रक्रिया निर्भाल्यते।

---

1. पा.सू.1.3.3
2. पा.सू.1.3.4
3. कौ(गो.द.पा.).खण्ड-1.परिशिष्टम् पृ.821
4. शब्दकल्पद्रुमः
5. पा.सू.1.1.21
6. बालमनोरमा,सू. 'आदिरन्त्येन सहेता'
7. बालमनोरमा,सू. 'आदिरन्त्येन सहेता'

## (6) अधिकारसूत्रम्–

अधि-उपसर्गपूर्वकात् कृधातोः घञ्-प्रत्यये कृते सति अधिकारशब्दः निष्पद्यते। लोके प्रायः स्वामित्वे अर्थे अधिकारशब्दस्य प्रयोगः दृश्यते। अत्र हि व्याकरणशास्त्रे अयमधिकारः लौकिकाधिकारात् भिन्नः भवति। अत्र हि "एकत्र उपात्तस्य अन्यत्र व्यापारः अधिकारः"[1] इति। ईदृशः अधिकारः व्याकरणशास्त्रे केषां भवेत् इति व्यवस्थापयितुं महर्षिणा पाणिनिना "स्वरितेनाधिकारः" इति सूत्रं निर्मितं वर्तते। अर्थात् यत् पदं शास्त्रकृता स्वरितत्वस्वरविशेषयुक्तम् उच्चारितं भवति तस्य उत्तरत्रानुवृत्तिः भवेदिति। यथा– 'कारके'[2] 'प्रत्ययः'[3] 'परश्च'[4] इत्यादीनि सूत्राणि। अस्य अधिकारस्य त्रयः भेदाः शास्त्रे अङ्गीकृताः सन्ति। तद्यथा–

> **सिंहावलोकितं चैव मण्डूकप्लुतमेव च।**
> **गङ्गाप्रवाहवच्चापि अधिकारस्त्रिधा मताः॥**[5]

अयं भावः प्रभावाधारेण अधिकारः त्रिविधः भवतीति स्वीकृतं वर्तते। तद्यथा –

1. सिंहावलोकनवत्
2. मण्डूकप्लुतिवत्
3. गङ्गाप्रवाहवच्च

1)सिंहावलोकनवत् - अधिकारस्य सिंहवद्व्यवहारत्वात् एष भेदः कल्पितः वर्तते। यथा- 'उदि श्रयतियौतिपूद्रुवः' "इत्यत्र 'विभाषाऽऽङि रुप्लुवोः'[7] इत्यतः 'विभाषा' इत्यस्य सम्बन्धः सिंहावलोकनेन भवति। तदुक्तं काशिकाकारेण "वक्ष्यमाणं विभाषाग्रहणमिह सिंहावलोकितन्यायेन सम्बध्यते।"[8] तेन वक्तुं शक्यते यत्र परसूत्रायाधिकारः पूर्वसूत्रे आयाति तादृशः सिंहावलोकनवदधिकारः भवति।

| यस्याधिकारः (परसूत्रम्) | व्यवधानम् | यत्राधिकारः (पूर्वसूत्रम्) |
|---|---|---|
| 'विभाषाऽऽङि रुप्लुवोः' (3.3.50) इत्यतः विभाषा इत्यस्याधिकारः | नास्ति | 'उदि श्रयतियौतिपूद्रुवः'(3.3.49) |

---

1. कौ(गो.द.पा.).खण्ड-1.परिशिष्टम्, पृ.821
2. पा.सू.1.3.11
3. पा.सू.1.4.23
4. पा.सू.3.1.1
5. पा.सू.3.1.2
6. कौ(गो.द.पा.).खण्ड-1.परिशिष्टम्, पृ.821
7. पा.सू.3.3.49
8. पा.सू.3.3.50
9. काशिका पा.सू.3.3.49

2) मण्डूकप्लुतिवत्– मण्डूकवत् उत्प्लुत्य उत्प्लुत्य यस्याधिकारस्य गतिः तादृशः मण्डूकप्लुतिवदधिकारः उच्यते। यथा– 'परिक्रयणे सम्प्रदानमन्यतरस्याम्'[1] इत्यतः 'अभिनिविशश्च'[2] इत्यत्र 'अन्यतरस्याम्' इत्यस्य अनुवृत्ति मण्डूकप्लुत्या भवति। तथोक्तं कौमुद्याम्–" 'परिक्रयणे सम्प्रदानम् ।' इति सूत्रादिह मण्डूकप्लुत्या अन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात्क्वचिन्न।[3] तेन वक्तुं शक्यते – यत्र व्यवहितेऽपि अधिकारः तादृशः मण्डूकप्लुतिवदधिकारः भवतीति।

| यस्याधिकारः (पूर्वसूत्रम्) | व्यवधानम् | यत्राधिकारः (परसूत्रम्) |
|---|---|---|
| 'परिक्रयणे सम्प्रदानमन्यतरस्याम्'(1.4.44) इत्यतः अन्यतरस्याम् इत्यस्य | * आधारोऽधिकरणम्<br>* अधिशीङ्स्थाऽऽसां कर्म | अभिनिविशश्च (1.4.47) |

3)गङ्गाप्रवाहवच्च सर्वोऽपि अधिकारः प्रायः गङ्गाप्रवाहवदेव भवति। यत्र अप्रतिहतानुवृत्तिः उत्तरत्र सूत्रस्य तादृशः अधिकारप्रकारः गङ्गाप्रवाहवदित्युच्यते। यथा– 'प्राक्कडारात्समासः'[4], 'पूर्वत्रासिद्धम्'[5] इत्यादयः।

| यस्याधिकारः (पूर्वसूत्रम्) | यत्राधिकारः (उत्तरसूत्राणि) |
|---|---|
| 1. 'प्राक्कडारात्समासः' (2.1.3) इतः समास इत्यस्य | *'कडाराःकर्मधारये' (2.2.38) इत्यतः प्राक् |
| 2. 'पूर्वत्रासिद्धम्' (8.2.1) | * अध्यायपरिसमाप्तिपर्यन्तम् |

**निष्कर्षः**

उद्देश्यानाम् आधारेण "सूत्रभेदविमर्शः" इति लेखस्य स्वरूपं चिन्तितम्। क्रमशः उद्देश्यानां पूर्त्यर्थम् अत्र एकैकशः विषयप्रवर्तनं चिन्तितम्। तद्यथा –

'भूमिकायां' सूत्रशैल्याः महत्त्वपरिज्ञानमभूत्।

'सूत्रशब्दस्यार्थः' अस्मिन् शीर्षके 'व्याकरणशास्त्रसन्दर्भे सूत्रार्थविज्ञानम्' इति विषयः विचारितः।

'सूत्रस्वरूपम्' इत्यत्र शास्त्रीयसूत्रस्वरूपस्य स्पष्टप्रतिपत्त्यर्थम् आयासः विहितः।

'सूत्रभेदाः' इत्यत्र षड्विधानां सूत्राणां स्पष्टपरिज्ञानाय लक्षणोदाहरणानि विचारितानि।

1. पा.सू.1.4.44
2. पा.सू.1.4.47
3. सि.कौ., सू.सं.- 543
4. पा.सू.2.1.3
5. पा.सू.8.2.1

**उपसंहारः**

उद्देश्यानां संपूर्ति कर्तुं लेखे प्रयत्नः दृतः विद्यते। षड्विधसूत्रेषु अष्टाध्यायीसूत्राणां वर्गीकरणं कर्तुं वयं सात्मविश्वासं प्रभवामः। किन्तु एतेषां यथार्थसंख्यानिश्चयार्थं शास्त्रीयसिद्धान्तानां बहुत्र पर्यालोचनम् अपेक्ष्यते।

**सन्दर्भग्रन्थसूचिः**


1) अष्टाध्यायीसूत्रपाठः, दीक्षितपुष्पाकृतप्रकरणनिर्देशसमन्वितः, 2010, संस्कृतभारती, नई दिल्ली।

2) उत्सर्गापवादमीमांसा, प्रो.लक्ष्मी शर्मा, 2013, लिट्रेसी सर्किल,जयपुर।

3) काशिका (सम्पादकौ- स्वा.द्वारिकादासः शास्त्री, पं.श्रीकालिकाप्रसादशुक्लः), 1966,तारा पब्लिकेशन्स, वाराणसी।

4) पाणिनीय धात्वधिकार समीक्षा, डॉ.सुजाता त्रिपाठी, 2005, नागपब्लीशर्स,दिल्ली।

5) पाणिनीयव्याकरणतत्त्वप्रदीपः, पं.दीनहवन्धु, 1988, कामेशवर सिंह दरभंगा संस्कृत विश्वविद्यालय।

6) बृहद्धातुकुसुमाकरः, पं.हरेकान्तमिश्रः, 2011, चौखम्बा संस्कृतप्रतिष्ठान।

7) लघुशब्देन्दुशेखरः ('राधिका' -पञ्चसन्ध्यन्तो भागः), व्याख्याकारः – श्रीब्रह्मदत्तद्विवेदि, 2008, चौखम्बा संस्कृत सिरीज औफिस, वाराणसी।

8) लघुशब्देन्दुशेखरः खण्डः -1, (मुक्तस्वाध्यायपीठम्, लेखकः – डॉ.सुबोधशर्मा), 2010, राष्ट्रियसंस्कृतसंस्थानम्।

9) लघुसिद्धान्तकौमुदी

10) व्याकरणमहाभाष्यम् (भाष्यप्रदीपोद्योतसमुल्लसितम्-प्रथमखण्डः), संशोधकः– भार्गवशास्त्रीजोशी, 2011, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली

ISSN - 0974-8946
अप्रैल-जून, 2019

शोधप्रभा
वर्षः 44, द्वितीयोऽङ्कः

# व्युत्पत्तिवाददिशा प्राच्यनैयायिकानां धात्वर्थमीमांसा

श्रीश्यामसुन्दरशर्मा*

## 1. प्रस्तावना -

आधुनिकभाषाविज्ञानालोके संस्कृतभाषा भारोपीयभाषाकुटुम्बे, तत्रापि च संयोगात्मकबहिर्मुखीश्लिष्टश्रेण्यां परिगण्यते। अयमनेनात्राशयः संस्कृतभाषायां प्रकृत्यंशः प्रत्ययांशश्च मिलित्वा शब्दस्वरूपं निर्णयतः। तत्र प्रकृतिः जगदीशतर्कालङ्कारस्य शब्दशक्तिप्रकाशिकायां **'निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः'**[1] इति वचनानुरोधेन नामधातुभेदेन द्वेधा कल्पिता। तत्र धातुरूपप्रकृतेः कोऽर्थ इति विषयमवलम्ब्य व्याकरणशास्त्र-मीमांसाशास्त्र-न्यायशास्त्रेति संप्रदायत्रये अतिविस्तृतोऽतिगभीरश्च विचारः प्रस्तुतो वर्तते। इहत्य विचारप्रसङ्गे व्याकरणशास्त्रे प्राच्यनव्यमतभेदेन विभागद्वयं वर्तते। तत्र प्राच्यवैयाकरणः भट्टोजिदीक्षितो वैयाकरणभूषणकारिकायां 'धात्वर्थः फलव्यापारौ' इति प्रस्तौति। नव्यवैयाकरणः श्रीमन्नागेशभट्टो वैयाकरणसिद्धान्तलघुमञ्जूषायां कर्तरि 'फलविशिष्टव्यापारम्', कर्मणि च 'व्यापारविशिष्टफलम्' धात्वर्थं ब्रूते। मीमांसकेषु प्रभाकरः 'फलमात्रम्' धात्वर्थमिति वदति। न्यायशास्त्रपरम्परायामपि प्राच्यनव्यमतभेदेन विभागद्वयमस्ति। तत्र प्राच्यनैयायिकाः 'धात्वर्थः व्यापारमात्रम्' इति वदन्ति। नव्यनैयायिकेषु भवानन्दः गदाधरभट्टाचार्यश्च 'फलावच्छिन्नव्यापारो धात्वर्थः' इति मन्वाते। अनया रीत्या धात्वर्थे तत्तत्सिद्धान्तविषयकप्रतिज्ञावाक्यान्युपस्थापितानि।

## 2. आक्षेपः - धात्वर्थे अविलक्षणबोधापत्तिरूपदोषः -

प्राच्यनैयायिकसिद्धान्तदिशा व्यापारमात्रस्य धात्वर्थत्वे सर्वेषां धातूनां व्यापारस्य समानत्वेन सर्वैः धातुभिः समानाकारकः शाब्दबोधः स्यात्। तथा सति 'चैत्रः ग्रामं गच्छति' इति वाक्यस्य स्थाने 'चैत्रः ग्रामं त्यजति' इति वाक्यस्य, तथा च 'चैत्रः ग्रामं त्यजति' इति वाक्यस्य स्थाने 'चैत्रः ग्रामं गच्छति' इति वाक्यस्य प्रयोगोऽवारणीयो भवेत्। पूर्वोक्तवाक्ययोः धातुं विहाय सर्वं समानमस्ति। 'गमित्यजिधात्वर्थावपि प्राच्यनैयायिकपक्षे व्यापारत्वेन समानार्थकौ। एतस्माद्धेतोः 'गम्'धातुस्थाने 'त्यज्'धातुप्रयोगस्तथैव 'त्यज्'धातुस्थाने 'गम्'धातुप्रयोगश्च स्यादिति अविलक्षणबोधापत्तिरूपदोषः प्राच्यनैयायिकपक्षे समापतति।

---

* शोधच्छात्रः, संस्कृतविभागः, देहलीविश्वविद्यालयः, देहली

1 निरुक्ता प्रकृतिर्द्वेधा, नामधातुप्रभेदतः ।
यत् प्रादिपदिकं प्रोक्तं, तन्नाम्नो नातिरिच्यते ॥13॥ प्रकृतिनिरूपणप्रकरणम्, शब्दशक्तिप्रकाशिका, पृ. 64.

3. समाधानम् – व्युत्पत्तिनिर्माणम् –

गदाधरेण प्राच्यनैयायिकपक्षे अविलक्षणबोधापत्तिरूपदोषो निवारितः। तद्यथा – प्राच्यानां धात्वर्थीभूतव्यापारो विशिष्टव्यापारः। न च सः निर्विशेषव्यापारः। तस्य विशिष्टव्यापारस्य बोधः 'फलप्रकारकव्यापारविशेष्यकरूपः' भवति। तेन 'गम्'धात्वर्थव्यापारस्य बोधः 'संयोगरूपफलप्रकारक-स्पन्दरूपव्यापारविशेष्यको' भवति। 'त्यज्'धात्वर्थव्यापारस्य बोधश्च 'विभागरूपफलप्रकारकस्पन्दरूप-व्यापारविशेष्यको' भवति। तदनुसारं **'संयोगप्रकारकस्पन्दरूपव्यापारविशेष्यकशाब्दबोधं'** प्रति **'गम्'धातुजन्यव्यापारोपस्थितिः कारणम्। 'विभागप्रकारकस्पन्दरूपव्यापारविशेष्यकशाब्दबोधं'** प्रति च **'त्यज्'धातुजन्यव्यापारोपस्थितिः कारणमिति।**[1]

प्राच्यनैयायिकैरेवं प्रकारेण शाब्दबोधं प्रति कार्यकारणभावस्य व्याख्यानं कर्तुं शक्यते। तस्मात् 'गम्'धातुसमभिव्याहारे 'संयोगप्रकारकव्यापारविशेष्यकः' शाब्दबोधो भवति। अथ च 'त्यज्'धातुसमभिव्याहारे 'विभागप्रकारकव्यापारविशेष्यकः' शाब्दबोधो भवति। उपस्थितिभेदाच्च 'गम्-त्यज्'धात्वर्थयोरस्ति वैलक्षण्यम् (अर्थभेदः), पदविशेषसत्वे फलविशेषविषयकबोधात्। 'चैत्रः ग्रामं गच्छति' इति वाक्यस्य स्थाने 'चैत्रः ग्रामं त्यजति' इति वाक्यस्य, 'चैत्रः ग्रामं त्यजति' इति वाक्यस्य स्थाने 'चैत्रः ग्रामं गच्छति' इति वाक्यस्य च प्रयोगो भवतीत्यापत्तिर्दातुं नैव शक्यते। तदेवं रीत्या सकर्मकधातुषु वैलक्षण्यं सम्पादितं ग्रन्थकृता।

4. आक्षेपः – 'ग्रामं गच्छति' इतिवत् 'ग्रामं स्पन्दते' इत्यस्यापि प्रयोगापत्तिः –

सकर्मकधातुषु वैलक्षण्यप्रतिपादनानन्तरं ग्रन्थे सकर्मकाकर्मकधातुषु वैलक्षण्यदोषं प्रदर्शयन्ति गदाधरभट्टाचार्याः। तद्यथा – प्राच्यनैयायिकाः द्वितीयाविभक्त्यर्थसंयोगस्य 'गम्'धात्वर्थव्यापारे जनकतासंसर्गेणान्वयतात्पर्येण 'ग्रामं गच्छति' इति वाक्यं यथा प्रयुज्यते। तथैव द्वितीयाविभक्त्यर्थसंयोगस्य स्पन्दधात्वर्थव्यापारे जनकतासंसर्गेणान्वयतात्पर्येण 'ग्रामं स्पन्दते' इत्यनिष्टप्रयोगः स्यात्।

अयमाशयः – प्राच्यनैयायिकाः व्यापारमात्रस्य धात्वर्थत्वं स्वीकुर्वन्ति। परं तथाङ्गीकारे गमिधात्वर्थस्पन्दधात्वर्थयोः समानार्थत्वापत्तिरापतति। तथाहि धात्वर्थस्य धात्वर्थेन पृथक्करणं सकर्मकाकर्मकविभाजनं वा तत्रत्य फलांशेन जायते। स च तन्मतानुसारं धात्वर्थस्य भाग एव नास्ति। अतो यथा 'ग्रामं गच्छति' इति वाक्यप्रयोगः व्याकरणसम्मतस्तथा 'ग्रामं स्पन्दते' इत्यपि व्याकरणसम्मतः स्यात्। वस्तुतस्तु स्पन्दधातोरकर्मकत्वात् 'ग्रामं स्पन्दते' इत्यप्रामाणिकप्रयोगः।

5. समाधानम् – आकाङ्क्षाभावः –

ग्रन्थकारः प्राचीननैयायिकानां समाधानमनुवदति – 'ग्रामं गच्छति' इत्यत्र 'गम्'धातुनोपस्थापितो व्यापारः ग्रामनिष्ठसंयोगश्च द्वयोः जनकत्वसंसर्गद्वारा परस्परमन्वयबोधाकाङ्क्षा विद्यते। अतः

---

1. "फलविशेषान्वयबोधे च धातुविशेषजन्यव्यापारोपस्थितेः हेतु"तया 'ग्रामं त्यजति' इत्यादौ धात्वर्थस्पन्दे ग्रामनिष्ठविभागजनकत्वमेव, 'ग्रामं गच्छति' इत्यादौ च धात्वर्थस्पन्दे ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते, न तु विपरीतम्। व्युत्पत्तिवादः, प्रथमभागः, तिरुपतिः, पृ. 203.

फलव्यापारयोर्मध्ये जनकत्वसंसर्गः स्थाप्यते। आकाङ्क्षाभावे पदार्थान्वयाभाव, आकाङ्क्षायाः शाब्दबोधहेतुत्वेन[1], कारणाभावे कार्याभावनियमात्। अतः 'ग्रामं स्पन्दते' इत्यत्र तथाविधाकाङ्क्षाभावान्नास्ति प्राच्यनैयायिकपक्षेऽपि तथा प्रयोगः।

**6. आक्षेपः – समभिव्याहार एव आकाङ्क्षा –**

पूर्वपक्षिणा आक्षिप्यते। तद्यथा – समभिव्याहार एव आकाङ्क्षा भवति। समभिव्याहारो नाम सहप्रयोगः। तदेवं यथा – 'ग्रामं गच्छति' इत्यत्र 'ग्राम' 'अम्' 'गम्' इति समभिव्याहारे ग्रामनिष्ठसंयोगनिरूपितजनकताया आकाङ्क्षा 'गम्'धातूपात्तव्यापारे भवति। तथा 'ग्रामं स्पन्दते' इत्यत्र 'ग्राम' 'अम्' 'स्पन्द' इति समभिव्याहारे ग्रामनिष्ठसंयोगनिरूपितजनकताया आकाङ्क्षा 'स्पन्द'धातूपात्तव्यापारेऽपि स्यात्।

**7. समाधानम्** – अन्वयबोधयोग्यसमभिव्याहार एव आकाङ्क्षा **(सकर्मकाकर्मकधातुविभाजनम्)**

**7.1 आकाङ्क्षास्वरूपम् –**

किन्नाम आकाङ्क्षेति विचारपरो विश्वनाथपञ्चाननभट्टाचार्याः न्यायसिद्धान्तमुक्तावल्याः शब्दखण्डे विलिखन्ति – **"येन पदेन विना यत्पदस्य अन्वयाननुभावकत्वम्, तेन पदेन सह तस्य आकाङ्क्षा"।**[2] श्रीमदन्नम्भट्टमहाभागाः तर्क- सङ्ग्रहस्य शब्दपरिच्छेदे तथैव – **"पदस्य पदान्तरव्यतिरेकप्रयुक्त-अन्वय-अननुभावकत्वम् आकाङ्क्षा"।**[3] अयमाशयः – पदान्तरं विना पदं शाब्दबोधं नैव जनयति। अतस्तेषु पदेषु परस्परमाकाङ्क्षा भवति। पदानि परस्परमाकाङ्क्षन्ति। आकाङ्क्षापि शाब्दबोधे हेतुः।[4] तस्याः शाब्दबोधहेतुत्वादेव तदभावे शाब्दबोधाभावः।

किं शाब्दबोधे येन केनापि पदेनोपस्थापितेनार्थेन सह आकाङ्क्षा पर्यवस्यति उत वा केनचिद्विशिष्टपदेनोपस्थापितेनैवार्थेन सहाकाङ्क्षायाः समाप्तिः? अत्र गङ्गेशोपाध्यायाः तत्त्वचिन्तामणिग्रन्थस्य शब्दखण्डस्य आसत्तिवादप्रकरणे– **"क्रियापदो- पस्थापिता क्रिया, कारकपदोपस्थापितञ्च कारकं परस्परमाकाङ्क्षति, न तूपस्थितिमात्रम्, अन्यथा 'द्वारं कर्मता पिधेहि', 'द्वारं पिधानं कृतिरि'त्यत्रापि**

---

1. (क) एकपदार्थेऽपरपदार्थस्य सम्बन्धो योग्यता, न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 346.
   (ख) आसत्तिज्ञानं योग्यताज्ञानम् आकाङ्क्षाज्ञानं तात्पर्यज्ञानञ्च शाब्दबोधे कारणम्, न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 339.
   (ग) आकाङ्क्षायोग्यतासन्निधिश्च वाक्यार्थज्ञानहेतुः। तर्कसङ्ग्रहः, शब्दपरिच्छेदः, पृ. 74.
2. न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 348.
3. न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 348.
4. (क) आसत्तिज्ञानं योग्यताज्ञानम् आकाङ्क्षाज्ञानं तात्पर्यज्ञानञ्च शाब्दबोधे कारणम्, न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 339.
   (ख) आकाङ्क्षायोग्यतासन्निधिश्च वाक्यार्थज्ञानहेतुः। तर्कसङ्ग्रहः, शब्दपरिच्छेदः, पृ. 74.

**क्रियाकर्माध्यार इवान्वयबोधप्रसङ्ग:**"[1] इति विचारं प्रस्तुवन्ति। अस्यायमाशयः – येन केनापि पदेन अर्थोपस्थितौ सति न परस्परं तयोरर्थयोरन्वयबोधः, अपि तु यानि पदान्यन्वयबोधं प्रति साकाङ्क्षाणि, आकाङ्क्षया तत्पदाभ्यामुपस्थापितयोरर्थयोरेव परस्परमन्वयबोधः, नान्यथा। यथा –

| | **साकाङ्क्षवाक्यानि** | **निराकाङ्क्षवाक्यानि** |
|---|---|---|
| 1. | घटं करोति | घटं यतते |
| 2. | घटम् | घटः कर्मत्वम् |
| 3. | घटम् आनयति | घटः कर्मत्वम् आनयनम् कृतिः |
| 4. | ग्रामं गच्छति | ग्रामं स्पन्दते |
| 5. | द्वारं पिधेहि | द्वारं कर्मता पिधेहि द्वारं पिधानं कृतिः |

'घटं यतते' इति वाक्यस्थेन घटप्रातिपदिकेन 'घटव्यक्तेः', 'घट'प्रातिपदिकोत्तर'अम्'विभक्त्या 'कर्मत्वस्य' चोपस्थितिर्भवितुमर्हति, तथा च घटव्यक्तेः 'अम्'पदार्थकर्मत्वस्य च निष्ठत्वसम्बन्धो भासते साकाङ्क्षत्वात्। प्रकृत्यर्थघटव्यक्तेः प्रत्ययार्थकर्मत्वस्य च परस्परमन्वयो भवितुमर्हति। तद्वदेव 'घटः कर्मत्वम्' इत्यत्र 'घट'प्रातिपदिकेन घटव्यक्तेरुपस्थितिः, कर्मत्वमिति पदेन च कर्मत्वस्योपस्थितिर्भवति। तदा पदार्थयोः 'घटव्यक्ति-कर्मत्वयोः' आधाराधेयभावसम्बन्धं स्थापयित्वा 'घटनिष्ठकर्मत्वम्' इति बोधो भवितुमर्हति। परं वैयाकरणनैयायिकयोर्मते 'घटं यतते', 'घटः कर्मत्वम्' इत्येतादृशवाक्येष्वन्वयबोधो न संभवति। एतेन ज्ञायते यत् यदि याभ्यां काभ्यां पदाभ्यामुपस्थापितयोरर्थयोः परस्परमन्वयबोधस्स्यात्तदा यः शाब्दबोधः 'घटम्' इत्यस्माज्जायते। स एव शाब्दबोधः 'घटः कर्मत्वम्' इति पदसमूहादपि स्यात्। अथ च यः शाब्दबोधः 'घटं करोति' इत्यस्माद्वाक्याज्जायते। स एव शाब्दबोधः 'घटं यतते' इति पदसमूहादपि स्यात्। अत्र गङ्गेशोपाध्यायाः तत्त्वचिन्तामणिग्रन्थस्य शब्दखण्डे वदन्ति – **'घटः कर्मत्वमानयनं कृतिरित्यादौ अभेदेन नान्वयबोधोऽयोग्यत्वात्। तत्तत्पदेभ्यः तात्पर्यविषयतत्तत्पदार्थस्वरूपज्ञानञ्च पदान्तरं विनैव। घटमानयतीत्यत्रेव भ्रमेण तथान्वयतात्पर्येऽपि क्रियाकारकभावेन नान्वयः नामविभक्तिधात्वाख्यातक्रियाकारकपदानामन्वयबोधे तान्येव पदानि समर्थानि, न तु तदर्थकानि पदान्तराणि'**।[2] तथैव विश्वनाथपञ्चाननभट्टाचार्याः न्यायसिद्धान्तमुक्तावल्याः शब्दखण्डे विलिखन्ति – **'घटकर्मताबोधं प्रति घटपदोत्तरं द्वितीयारूपाकाङ्क्षाज्ञानं कारणम्, तेन घटः कर्मत्वम् आनयनं कृतिरित्यादौ न शाब्दबोधः'**।[3] एतेन ज्ञायते यत् यः शाब्दबोधः 'घटम्' इत्यस्माज्जायते, स एव शाब्दबोधः 'घटः कर्मत्वम्' एतस्माद्वाक्यादाकाङ्क्षाभावान्न कदापि भवति।[4] तेन 'घटः कर्मत्वम्' इति नास्ति वाक्यप्रयोगः। तथैव

1. तत्त्वचिन्तामणिः, शब्दखण्डः, आसत्तिवादसिद्धान्तः, पृ. 311.
2. तत्त्वचिन्तामणिः, शब्दखण्डः, शब्दाकाङ्क्षावादसिद्धान्तः, पृ. 208.
3. न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 350.
4. कारकचक्रम्, अनुच्छेदः – 24, पृ. 21.

यः शाब्दबोधः 'घटं करोति' इत्यस्माज्जायते, स एव शाब्दबोधः 'घटं यतते' एतस्माद्वाक्यादाकाङ्क्षाभावान्न कदापि भवति। 'यत्'धातुसमभिव्याहृतवाक्यात् कर्मकारकस्य बोधो नास्ति। एतदर्थं 'कृञ्'धातुसमानार्थक'यत्'धातोः कर्माकाङ्क्षा नास्ति, आकाङ्क्षाभावात्। तेन 'घटं यतते' इति नास्ति वाक्यप्रयोगः।

गदाधरभट्टाचार्यस्य विचारे 'ग्रामं गच्छति' इति वाक्यस्थाने 'ग्रामं स्पन्दते' इति प्रयोगवारणाय प्राच्यनैयायिकपक्षे य आकाङ्क्षाविषयकसिद्धान्तः प्रस्तुतः। स च सिद्धान्तः 'फलव्यापारयोर्धात्वर्थः' इत्यङ्गीकर्तॄणां नव्यनैयायिकानां वैयाकरणानाञ्च कृतेऽपि स्वीकर्तव्यः। अन्यथा यथा प्राचीननैयायिकमते 'ग्रामं गच्छति' इत्यस्य स्थाने 'ग्रामं स्पन्दते' इति प्रयोगदोषः प्राप्नोति। तथैव नवीननैयायिकपक्षे वैयाकरणपक्षे चापि 'घटं करोति' इति वाक्यस्थाने 'घटं यतते' इति प्रयोगापत्तिः स्यात्। नव्यनैयायिकैः वैयाकरणैरपि च तथा प्रयोगो न स्वीक्रियते। एतेन ज्ञायते नवीननैयायिकाः वैयाकरणाश्च आकाङ्क्षाविषयकसिद्धान्तमवश्यमङ्गीकुर्युरिति।

अयमाशयः – 'घटं करोती'ति वाक्ये 'घटम्' इति पदस्य 'घटनिष्ठविषयता' इति पदार्थः। विषयतायाः 'कृञ्'धातुनोपस्थापितकृतौ निरूपकत्वसम्बन्धेनान्वयः। 'कृञ्'धात्वर्थः 'यत्नः'। 'घटनिष्ठविषयतानिरूपकविषयिताश्रययत्नवान्' इति अन्वयबोधः। यत्-कृञोः समानार्थकत्वात् 'घटं करोति' इत्यत्र यः बोधः, स च बोधः 'घटं यतते' इत्यत्रापि भवितुमर्हति। परञ्च अन्वयबोधाकाङ्क्षाभावात् 'घटं करोति' इति वाक्यस्थले 'घटं यतते' इति नास्ति वाक्यप्रयोगः। अतः 'व्यापारमात्रम्' धात्वर्थः उत वा फलव्यापारौ, प्रत्येकस्मिन् पक्षे **'ययोर्यादृशान्वयबोधे आकाङ्क्षा, तदुपस्थापितयोरेव तादृशान्वयबोधः'**।[1] अर्थात् ययोः = पदयोः, यादृशान्वयबोधे आकाङ्क्षा, तदुपस्थापितयोः= पदोपस्थापितयोरर्थयोः, एव तादृशान्वयबोधः। येन केनापि पदेनोपस्थापितार्थयोर्न परस्परमन्वयबोधः, अपि तु आकाङ्क्षितपदयोरुपस्थापितार्थयोरेवान्वयबोध इति आकाङ्क्षाविषयकः सिद्धान्तः स्वीकर्तव्यः।

एतेन सिद्धान्तेनैव प्राच्यनैयायिकपक्षे 'ग्रामं गच्छति' इति वाक्यस्थाने 'गम्' धातुसमानार्थक' स्पन्द' धातुना 'ग्रामं स्पन्दते' इति न वाक्यप्रयोगः। तथैव नव्यनैयायिकपक्षे वैयाकरणपक्षे च 'घटं करोति' इति वाक्यस्थाने 'कृञ्' धातुसमानार्थक'यत्'धातुना 'घटं यतते' इति न वाक्यप्रयोगः। यतो हि ग्रामनिष्ठसंयोगे 'गम्'धातुनोपस्थापितव्यापारे च परस्परं जन्यजनकभावसम्बन्धस्य आकाङ्क्षा। सा चाकाङ्क्षा यथा गमिसमानार्थकस्पन्दधातौ नास्ति तथा कृञिसमानार्थकयतिधातावपि नास्ति।

## 7.2 समाधानम् –

समभिव्याहारमात्रमेव नाकाङ्क्षा, अपि तु अन्वयबोधयोग्यसमभिव्याहार आकाङ्क्षा। व्याकरणशास्त्रस्य न्यायशास्त्रस्य च परम्परायां स्पन्दधात्वर्थव्यापारे फलस्यान्वयो न कदापि विहितः। अतः स्पन्दधातुनोपस्थापितव्यापारे फलान्वयस्य आकाङ्क्षाभावो वर्तते। 'ग्रामं गच्छति' सदृशः समभिव्याहारः

1. 'ययोर्यादृशान्वयबोधे आकाङ्क्षा, तदुपस्थापितयोरेव तादृशान्वयबोधः', व्युत्पत्तिवादः, प्रथमभागः, तिरुपतिः, पृ. 204.

'ग्रामं स्पन्दते' इत्यस्य सत्त्वेऽपि ग्रामनिष्ठसंयोगस्य स्पन्दधात्वर्थव्यापारे जनकत्वसम्बन्धेन नान्वय आकाङ्क्षाभावात्। 'ग्राम', 'अम्' 'स्पन्द' इति समभिव्याहार आकाङ्क्षाभावात् अन्वयबोधाय अक्षमः। द्वितीयाविभक्त्या सह गमिधातुसमभिव्याहारः शाब्दबोधाय कारणम्, एवञ्च द्वितीयाविभक्त्या सह स्पन्दधातुसमभिव्याहारः शाब्दबोधाय नास्ति कारणम्।

प्रसिद्धनियमः **"ययोर्यादृशान्वयबोधे आकाङ्क्षा, तदुपस्थापितयोरेव तादृशान्वयबोधः"** एतदनुसारमेवं वक्तुं शक्यते - यत्संयोगरूपात्मकफलस्य 'स्पन्द'धात्वर्थव्यापारे जनकत्वसम्बन्धेन अन्वयबोधाय 'ग्रामम्' 'स्पन्दते' चेति पदयोराकाङ्क्षा नास्ति। अत एव 'ग्रामम्' 'स्पन्दते' चेत्यत्र परस्परमन्वयबोधो नास्ति। परञ्च द्वितीयार्थसंयोगादिरूपफलस्य जनकत्वसम्बन्धेन गमिधात्वर्थव्यापारेऽन्वयबोधं प्रति 'ग्रामम्' 'गच्छति' चेति पदयोः पारस्परिकाकाङ्क्षा अस्ति, तेन 'ग्रामम्' 'गच्छति' चेति पदयोरुपस्थापितार्थयोः परस्परमन्वयबोधो भवति।

एतस्माद्धेतोः गमिधात्वर्थव्यापारः फलान्वितत्वात् गमिति धातुः सकर्मकः। स्पन्दधात्वर्थव्यापारः फलानन्वितत्वात् स्पन्दधातुरकर्मकः। इत एव **"फलान्वितव्यापारबोधकधातोरेव सकर्मकत्वम्"** एवञ्च **"फल-अनन्वित- व्यापारबोधकधातोरेव अकर्मकत्वम्"** इति निमययोः प्रादुर्भावो भवति। तथैव गदाधरो ब्रवीति - 'अत एव समानार्थकत्वेऽपि गम्यादेरिव न स्पन्द्यादेः सकर्मकत्वव्यवहारः, फलान्वितव्यापारबोधकधातुत्वस्यैव तन्नियामकत्वात्' इति।[1] अनेन 'गम्''स्पन्द'धात्वर्थयोः व्यापारदृष्ट्या अर्थसाम्येऽपि, न व्यवहारसाम्यम्, अनुभवविरोधात्। यत्र गमिधातोः सकर्मकत्वव्यवहारः। तत्रैव स्पन्दधातोरकर्मकत्वव्यवहारः। अतो 'व्यापारमात्रं धात्वर्थः' इति स्वीकारे नास्ति दोष इति एतावत्पर्यन्तं सिद्ध्यति।

**8. आक्षेपः - द्वितीयाविभक्तिरहितवाक्ये अविलक्षणबोधापत्तिः -**

नव्यनैयायिकाः वैयाकरणाश्च फलव्यापारयोर्धात्वर्थतां स्वीकुर्वन्ति। प्राच्यनैयायिकास्तावत् 'व्यापारमात्रं धात्वर्थः', 'फलं द्वितीयाविभक्त्यर्थश्च' इति स्वीकुर्वन्ति। तदा 'ग्रामं गच्छति चैत्रः' इत्यादि द्वितीयाविभक्तिघटितवाक्येषु शाब्दबोधः सुतरां भवति। यतो हि 'व्यापारमात्रम्' धात्वर्थ इति पक्षे द्वितीयाविभक्तिघटितवाक्येषु विलक्षणशाब्दबोधाय एकः कार्यकारणभावः स्वीकृतः। स च नियमः (व्युत्पत्तिः) एवमस्ति -

* द्वितीयाविभक्तिसमभिव्याहृतगमिधातुजन्यबोधः संयोगरूपफलप्रकारकस्पन्द-रूपव्यापारविशेष्यको भवति। तदनुसारं संयोगरूपफलप्रकारकव्यापारविशेष्यकशाब्दबोधं प्रति गमिधातुनोपस्थापितव्यापारस्य कारणता।

* द्वितीयाविभक्तिसमभिव्याहृतत्यजिधातुजन्यबोधो विभागरूपफलप्रकारक-स्पन्दरूपव्यापारविशेष्यको भवति। तदनुसारं विभाग-

1. व्युत्पत्तिवादः, प्रथमभागः, तिरुपतिः, पृ. 204.

रूपफलप्रकारकस्पन्दरूपव्यापारविशेष्यकशाब्दबोधं प्रति त्यजिधातुनोपस्थापितव्यापारस्य कारणता।

कार्यकारणभावस्य व्युत्पत्तिरेषा द्वितीयाविभक्तिसमभिव्याहृतवाक्यविषये विद्यते। परञ्च द्वितीयाविभक्तिरहितवाक्येषु 'चैत्रः गच्छति', 'चैत्रः त्यजति' इत्यत्र कथं विलक्षणबोधः? भेदकसामग्र्यभावे वाक्ययोः समानार्थकत्वात्। फलतः 'चैत्रः गच्छति' इति वाक्यस्थाने 'चैत्रः त्यजति' इत्यस्य, तथा च 'चैत्रः त्यजति' इति वाक्यस्थाने 'चैत्रः गच्छति' इति प्रयोगापत्तिस्तथैव तिष्ठति।

**9. समाधानम् - धात्वर्थे लक्षणा -**

गदाधरभट्टाचार्यः प्राच्यनैयायिकसिद्धान्तं संरक्षयति। तद्यथा - 'चैत्रः गच्छति', 'चैत्रः त्यजति' चेत्यादिवाक्येषु द्वितीयाविभक्तेरभावेऽपि तात्पर्यानुपपत्तौ लक्षणया[1] गमित्यजीत्यादिधात्वर्थेषु वैलक्षण्यं (भेदः) कर्तुं शक्यते। तद्यथा - **'गम्'धातोः लक्षणा 'संयोगावच्छिन्नव्यापारे', 'त्यज्'धातोः लक्षणा 'विभागावच्छिन्नव्यापारे'** एवं धातोर्फलविशिष्टव्यापारे लक्षणया फलबोधकद्वितीया-विभक्तेरभावस्थलेष्वपि विविधधातुभिर्विलक्षणबोधः शक्यः।

'चैत्रः गच्छति' 'चैत्रः त्यजति' इत्यादिषु द्वितीयारहितवाक्यप्रयोगेषु यद्यपि धात्वर्थस्य शक्तिः व्यापारमात्रे। तथापि धातोः 'फलावच्छिन्नव्यापारे' निरूढलक्षणा स्वीक्रियते। यत्र 'चैत्रः ग्रामं गच्छति', अपि च 'चैत्रः ग्रामं त्यजति' इत्यादिषु द्वितीयाविभक्तिसमभिव्याहृतवाक्यप्रयोगस्तत्र धात्वर्थस्य शक्तिः 'व्यापारमात्रे'।

**10. आक्षेपः - शक्त्या अविलक्षणबोधापत्तिः -**

द्वितीयाविभक्तिरहितवाक्येषु अविलक्षणदोषस्य समाधानं प्राच्यनैयायिकपक्षे लक्षणया कृतः। परञ्च 'शक्तिः' इति शब्दवृत्त्या तावद्गमित्यजिधातुभ्यामविलक्षणः (एकसमानः) बोधो व्युत्पन्नजनाय स्यादेव। अतो द्वितीयाविभक्तिरहितवाक्येषु धातूभ्यामविलक्षणबोधापत्तिस्तथैव तिष्ठति।[2]

**11. समाधानम् - व्युत्पत्तिनिर्माणम् -**

गमिति धातोः कदापि फलरहितबोधोत्पत्तिर्नैव भवति, तस्य सकर्मकत्वात्। एतेन ज्ञायते 'गमिधातुजन्योपस्थितिः फलरहितबोधं प्रति न कदापि कारणम्'। तस्मात् **"गमिधातुजन्योपस्थिति-घटितसामग्र्यां फलविशेषविषयकबोधकसामग्री घटिता"** इति व्युत्पत्तिरङ्गीकार्या। अयमाशयः - 'गम्'धातुजन्योपस्थितिः फलविशेषविषयकबोधकसामग्री सहितैव भवति। 'गम्' धातुजन्यफलविशेष-

1. लक्षणाशक्यसम्बन्धस्तात्पर्यानुपपत्तिः। आसत्तिर्योग्यताकाङ्क्षा तात्पर्यज्ञानमिष्यते ।। न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 319, 339.
2. न च तत्र फलविशेषावच्छिन्नव्यापारे लक्षणा स्वीक्रियते, इति विलक्षणबोधोपपत्तिरिति वाच्यम्। लक्षणया विलक्षणबोधजननेऽपि, शक्त्या अविलक्षणबोधजननसम्भवेन दर्शितातिप्रसङ्गस्य दुर्वारत्वात्। व्युत्पत्तिवादः, प्रथमभागः, तिरुपतिः, पृ. 205.

विषयकबोधः = संयोगानुकूलव्यापारः, फलविशेषविषयकबोधकसामग्री = ग्रामम् इत्यादिपदसमभिव्याहारः, फलविशेष-अविषयकबोधः = त्यागानुकूलव्यापारः। 'त्यज्'धातुसन्दर्भे फलविशेषविषयकबोधः = त्यागानुकूलव्यापारः, फलविशेषविषयकबोधकसामग्री = 'ग्रामम्' इत्यादिपदसमभिव्याहारः, फलविशेष-अविषयकबोधः = संयोगानुकूलव्यापारः। अतो यदा वयं 'ग्रामं गच्छति' 'ग्रामं त्यजति' वेति वाक्यं प्रयोक्ष्यामहे, तदा तु बोधः स्यादेव हि। परञ्च यदि वयं 'गच्छति' इति मात्रं 'त्यजति' इति मात्रं प्रयोक्ष्यामहे। तदा कोऽपि बोधो नैव प्रसज्येत, कारणसामग्र्यभावात्। तथैव यदा द्वितीयाविभक्तिरहितवाक्ये बोध एव नास्ति। तदा अविलक्षणबोधापत्तेर्निवारणं स्वत एव भवति।

**12. आक्षेपः - भ्रान्ताय अविलक्षणबोधापत्तिः -**

गमित्यजि चैतौ समानार्थकौ इति यो भ्रान्तपुरुषः, तस्य कृते यथा 'गच्छती'ति वाक्यात् संयोगफलविषयकबोधस्तथैव 'त्यजती'ति वाक्यात् संयोगरूपार्थबोधस्स्यात्, विनिगमनाविरहात्। कश्चन भ्राम्यति 'गम्''त्यज्' चैतौ समानार्थकौ। तदा सः भ्रान्तः 'गच्छति' इति वाक्यं 'संयोगम्' बोधयति, तथैव 'त्यजति' इत्यपि वाक्यं 'संयोगमेव' बोधयतीति जानाति। यदा भ्रान्तजनाय कर्मप्रत्ययरहितवाक्ये अविलक्षणबोधो जायमानोऽस्ति। तदा कर्मप्रत्ययघटितवाक्येऽपि 'ग्रामं गच्छति' इति वाक्यात् 'ग्रामनिष्ठसंयोगस्य' बोधस्तथैव 'ग्रामं त्यजति' इत्यत्रापि 'ग्रामनिष्ठसंयोगस्यैव' बोधः स्यादित्यस्यां स्थितौ 'गम्' धातुजन्योपस्थितौ फलविशेषविषयकबोधकसामग्री घटिता' नियमस्य एतस्य बाधो दृश्यते। यतो हि प्रकृतप्रसङ्गे 'गम्'धातुना फलविशेष-अविषयकबोधः (त्यागानुकूलव्यापारः) अधुना भवति। तथैव 'त्यज्' धातुनापि फलविशेष-अविषयकबोधः (संयोगानुकूलव्यापारः) भवत्येव हि। अतः 'गम्' धातुजन्योपस्थितौ फलविशेषविषयकबोधकसामग्री घटिता' नियमोऽयम् अत्रैव निरस्यते। नियमनिरसनात् यथा भ्रान्तस्य अविलक्षणबोधस्तथैव प्रमावतोऽपि स्यात्। एवं कर्मप्रत्ययरहितवाक्यस्थले 'गम्''त्यज्'चेत्यनयोः शाब्दबोधे अविलक्षणतापत्तिदोषस्तथैवावतिष्ठति।

**13. समाधानम् - पदप्रयोगनियामकम् अनादितात्पर्यम् -**

कर्मप्रत्ययासमभिव्याहृतत्यागगमनादिपदेषु 'तत्तत्फलावच्छिन्नव्यापारे' अनादितात्पर्यस्य परिकल्पनं क्रियते, न तु व्यापारमात्रे, अनादितात्पर्यस्यैव हि स्वारसिकप्रयोगनियामकत्वात्। अत एव प्रामाणिकजनः 'गम्''त्यज्' चेत्यनयोरेकार्थतात्पर्येण स्वारसिकप्रयोगन्न कुर्वन्ति।[1]

ननु यदि द्वितीयायाः विभागरूपफलबोधकत्वमप्यस्ति तत्र शक्तत्वात्। तदा 'ग्रामं गच्छति' इत्यत्रापि द्वितीयया विभागरूपफलोपस्थितिसंभवात् विभागतात्पर्येण 'ग्रामं गच्छति' इति स्वारसिकप्रयोगः कुतो नास्तीत्याशङ्का। तत्समाधीयते - तदर्थबोधकत्वमात्रं तु न तदर्थतात्पर्येण स्वारसिकप्रयोगनियामकम्, तथा सति शक्तिभ्रमादिना घटपदस्यापि पटादिबोधकतया पटेऽपि घटपदस्य स्वारसिकप्रयोगः स्यादेव, न च एवं भवतीति तदर्थबोधकत्वमात्रं तु न तदर्थतात्पर्येण स्वारसिकपदप्रयोग- नियामकमित्यर्थः।

1. कर्मप्रत्यय-असमभिव्याहृतत्यागगमनादिपदस्य तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्य कल्प्यते, न तु केवलव्यापारे। अनादितात्पर्यमेव च स्वारसिकप्रयोगनियामकमिति एकार्थतात्पर्येण प्रामाणिकानां स्वारसिको न त्यागगमनादिपदप्रयोगः। व्युत्पत्तिवादः, प्रथमभागः, तिरुपतिः, पृ. 207.

ननु नात्र शक्तिभ्रमस्य प्रसङ्गः शक्त्या बोधकत्वं स्वारसिकप्रयोगनियामकं भविष्यत्येवेति द्वितीयायाः शक्त्यैव विभागरूपफलबोधकत्वमस्त्येवेति, विभागादितात्पर्येण 'ग्रामं गच्छति' इति प्रयोगः स्यादित्याशङ्का। तत्समाधीयते – नापि शक्त्या बोधकत्वं स्वारसिकप्रयोगे नियामकम्, तदर्थतात्पर्येण निरूढलक्षणयापि स्वारसिकपदप्रयोगात्। तस्मादनादितात्पर्यमेव स्वारसिकपदप्रयोगनियामकम्। गमिधातुसमभिव्याहृतद्वितीयाया अनादितात्पर्यं संयोगरूपफले एवेति, न विभागतात्पर्येण 'ग्रामं गच्छति' इति प्रयोगापत्तिरित्यर्थः।

शक्यार्थे एव कश्चन धातुः नैव प्रयुज्यते, अपि तु अनादितात्पर्यपरम्परायां शब्दस्य योऽर्थस्तस्मिन्नप्यर्थे शब्दः प्रयुज्यते।[1] यथा – कौपीनशब्दस्य शक्तिः पापार्थे[2] परञ्च एतस्य प्रयोग अनादिकालपरम्परायां पुरुषेन्द्रियाच्छादकार्थे (अन्तर्वस्त्रार्थे) क्रियते। कौपीनशब्दप्रयोगो न कुत्रापि पापार्थे। तथैव प्रवीणकुशलादिशब्दप्रयोगः शक्यार्थं परित्यज्य निरूढलक्षणया लक्ष्यार्थे 'पटु'तात्पर्यार्थे स्वारसिक एव क्रियते। अनादितात्पर्यकारणवशादेव निरूढलक्षणया यादृशार्थबोधो घटपदाज्जायते, तादृशार्थबोधः 'घड़ा' 'गगरी' इति शब्दाभ्यां जायते। अन्यथा अपभ्रंशेषु शक्त्यभावादर्थबोधाभावः।[3]

सामान्यतः न्यायशास्त्रे लक्षणा द्वेधा निरूढलक्षणास्वारसिकलक्षणा चेति। तत्र अनादितात्पर्यवती लक्षणा निरूढा, शक्तितुल्या। विवक्षितार्थप्रतिसन्धानमूला स्वारसिकलक्षणा चेति। शक्तिभ्रमस्थले अनादितात्पर्यपरम्परायां निरूढलक्षणा स्वीक्रियते। ततः गगरीत्यादिवाक्यानां शाब्दबोधः। यत्र शक्यार्थे बाधस्तत्र बोधसम्पादनाय वाक्यप्रयोगसंरक्षणाय च निरूढलक्षणा स्वीक्रियते नैयायिकैः।

अपभ्रंसशब्दैरर्थबोधाय मीमांसायाः म्लेच्छाधिकरणमध्येतव्यम्। तत्र वैयाकरणास्तावत् म्लेच्छ (अपभ्रंस/भ्रान्ति/असाधु)प्रयोगेऽपि शक्त्या अर्थबोधो जायत इति स्वीकुर्वन्ति, शक्तिग्राहकशिरोमणिव्यवहारात्। न च असाधुशब्दात् साधुशब्दस्मरणद्वारा अर्थबोधः, साधुशब्दस्मरणं विनापि बोधोत्पादनानुभवात्, तद्वाचकसाधुशब्दम् अजानतां बोधानापत्तेश्च।[4] वैयाकरणाः शक्तिन्तु साध्वष्वसाधुषु उभयत्र मन्यन्ते, परञ्च पतञ्जलिना महाभाष्ये साधुशब्देनार्थबोधे एव धर्मोत्पत्तिरिति नियमः कृतः।[5] तेन यवपदस्य शक्तिः यथा दीर्घशूके, तथैव कङ्गौ इति वैयाकरणाः।[6] नैयायिकास्तावत् यवपदशक्त्या बोधः दीर्घशूकस्य, कङ्गोर्बोधस्तु शक्तिभ्रमादिति व्यत्यासः।[7]

---

1 'यदि तात्पर्यज्ञानं कारणं न स्यात्तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोधो न स्यात्', न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 351.

2. अकार्यगुह्ये कौपीनम्, अमरकोशः – 3-3-22.

3. शक्तं पदं चतुर्विधं क्वचिद् यौगिकम्।
क्वचित् रूढं, क्वचिद् योगरूढं, क्वचिद् यौगिकरूढम् ॥19॥ न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 315.

4. परमलघुमञ्जूषा, शक्तिप्रकरणम्।

5. वैयाकरणमहाभाष्यम्, पस्पशाह्निकम्।

6. सा च शक्तिस्साधुष्विवापभ्रंसेष्वपि शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात्। परमलघुमञ्जूषा, शक्तिप्रकरणम्।

7. वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात्प्रयोगः। न्यायसिद्धान्तमुक्तावली, शब्दखण्डः।

विषयकबोधः = संयोगानुकूलव्यापारः, फलविशेषविषयकबोधकसामग्री = ग्रामम् इत्यादिपदसमभिव्याहारः, फलविशेष-अविषयकबोधः = त्यागानुकूलव्यापारः। 'त्यज्'धातुसन्दर्भे फलविशेषविषयकबोधः = त्यागानुकूलव्यापारः, फलविशेषविषयकबोधकसामग्री = 'ग्रामम्' इत्यादिपदसमभिव्याहारः, फलविशेष-अविषयकबोधः = संयोगानुकूलव्यापारः। अतो यदा वयं 'ग्रामं गच्छति' 'ग्रामं त्यजति' वेति वाक्यं प्रयोक्ष्यामहे, तदा तु बोधः स्यादेव हि। परञ्च यदि वयं 'गच्छति' इति मात्रं 'त्यजति' इति मात्रं प्रयोक्ष्यामहे। तदा कोऽपि बोधो नैव प्रसज्येत, कारणसामग्र्यभावात्। तथैव यदा द्वितीयाविभक्तिरहितवाक्ये बोध एव नास्ति। तदा अविलक्षणबोधापत्तेर्निवारणं स्वत एव भवति।

**12. आक्षेपः - भ्रान्ताय अविलक्षणबोधापत्तिः -**

गमित्यजि चैतौ समानार्थकौ इति यो भ्रान्तपुरुषः, तस्य कृते यथा 'गच्छती'ति वाक्यात् संयोगफलविषयकबोधस्तथैव 'त्यजती'ति वाक्यात् संयोगरूपार्थबोधस्स्यात्, विनिगमनाविरहात्। कश्चन भ्राम्यति 'गम्''त्यज्' चैतौ समानार्थकौ। तदा सः भ्रान्तः 'गच्छति' इति वाक्यं 'संयोगम्' बोधयति, तथैव 'त्यजति' इत्यपि वाक्यं 'संयोगमेव' बोधयतीति जानाति। यदा भ्रान्तजनाय कर्मप्रत्ययरहितवाक्ये अविलक्षणबोधो जायमानोऽस्ति। तदा कर्मप्रत्ययघटितवाक्येऽपि 'ग्रामं गच्छति' इति वाक्यात् 'ग्रामनिष्ठसंयोगस्य' बोधस्तथैव 'ग्रामं त्यजति' इत्यत्रापि 'ग्रामनिष्ठसंयोगस्यैव' बोधः स्यादित्यस्यां स्थितौ 'गम्' धातुजन्योपस्थितौ फलविशेषविषयकबोधकसामग्री घटिता' नियमस्य एतस्य बाधो दृश्यते। यतो हि प्रकृतप्रसङ्गे 'गम्'धातुना फलविशेष-अविषयकबोधः (त्यागानुकूलव्यापारः) अधुना भवति। तथैव 'त्यज्' धातुनापि फलविशेष-अविषयकबोधः (संयोगानुकूलव्यापारः) भवत्येव हि। अतः 'गम्' धातुजन्योपस्थितौ फलविशेषविषयकबोधकसामग्री घटिता' नियमोऽयम् अत्रैव निरस्यते। नियमनिरसनात् यथा भ्रान्तस्य अविलक्षणबोधस्तथैव प्रमावतोऽपि स्यात्। एवं कर्मप्रत्ययरहितवाक्यस्थले 'गम्''त्यज्'चेत्यनयोः शाब्दबोधे अविलक्षणतापत्तिदोषस्तथैवावतिष्ठति।

**13. समाधानम् - पदप्रयोगनियामकम् अनादितात्पर्यम् -**

कर्मप्रत्ययासमभिव्याहृतत्यागगमनादिपदेषु 'तत्तत्फलावच्छिन्नव्यापारे' अनादितात्पर्यस्य परिकल्पनं क्रियते, न तु व्यापारमात्रे, अनादितात्पर्यस्यैव हि स्वारसिकप्रयोगनियामकत्वात्। अत एव प्रामाणिकजनः 'गम्''त्यज्' चेत्यनयोरेकार्थतात्पर्येण स्वारसिकप्रयोगन्न कुर्वन्ति।[1]

ननु यदि द्वितीयायाः विभागरूपफलबोधकत्वमप्यस्ति तत्र शक्तत्वात्। तदा 'ग्रामं गच्छति' इत्यत्रापि द्वितीयया विभागरूपफलोपस्थितिसंभवात् विभागतात्पर्येण 'ग्रामं गच्छति' इति स्वारसिकप्रयोगः कुतो नास्तीत्याशङ्का। तत्समाधीयते - तदर्थबोधकत्वमात्रं तु न तदर्थतात्पर्येण स्वारसिकप्रयोगनियामकम्, तथा सति शक्तिभ्रमादिना घटपदस्यापि पटादिबोधकतया पटेऽपि घटपदस्य स्वारसिकप्रयोगः स्यादेव, न च एवं भवतीति तदर्थबोधकत्वमात्रं तु न तदर्थतात्पर्येण स्वारसिकपदप्रयोग- नियामकमित्यर्थः।

1. कर्मप्रत्यय-असमभिव्याहृतत्यागगमनादिपदस्य तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्यं कल्प्यते, न तु केवलव्यापारे। अनादितात्पर्यमेव च स्वारसिकप्रयोगनियामकमिति एकार्थतात्पर्येण प्रामाणिकानां स्वारसिको न त्यागगमनादिपदप्रयोगः। व्युत्पत्तिवादः, प्रथमभागः, तिरुपतिः, पृ. 207.

ननु नात्र शक्तिभ्रमस्य प्रसङ्गः शक्त्या बोधकत्वं स्वारसिकप्रयोगनियामकं भविष्यत्येवेति द्वितीयायाः शक्त्यैव विभागरूपफलबोधकत्वमस्त्येवेति, विभागादितात्पर्येण 'ग्रामं गच्छति' इति प्रयोगः स्यादित्याशङ्का। तत्समाधीयते – नापि शक्त्या बोधकत्वं स्वारसिकप्रयोगे नियामकम्, तदर्थतात्पर्येण निरूढलक्षणयापि स्वारसिकपदप्रयोगात्। तस्मादनादितात्पर्यमेव स्वारसिकपदप्रयोगनियामकम्। गमिधातुसमभिव्याहृतद्वितीयाया अनादितात्पर्य संयोगरूपफले एवेति, न विभागतात्पर्येण 'ग्रामं गच्छति' इति प्रयोगापत्तिरित्यर्थः।

शक्यार्थे एव कश्चन धातुः नैव प्रयुज्यते, अपि तु अनादितात्पर्यपरम्परायां शब्दस्य योऽर्थस्तस्मिन्नप्यर्थे शब्दः प्रयुज्यते।[1] यथा – कौपीनशब्दस्य शक्तिः पापार्थे[2] परञ्च एतस्य प्रयोग अनादिकालपरम्परायां पुरुषेन्द्रियाच्छादकार्थे (अन्तर्वस्त्रार्थे) क्रियते। कौपीनशब्दप्रयोगो न कुत्रापि पापार्थे। तथैव प्रवीणकुशलादिशब्दप्रयोगः शक्यार्थं परित्यज्य निरूढलक्षणया लक्ष्यार्थे 'पटु'तात्पर्यार्थे स्वारसिक एव क्रियते। अनादितात्पर्यकारणवशादेव निरूढलक्षणया यादृशार्थबोधो घटपदाज्जायते, तादृशार्थबोधः 'घड़ा' 'गगरी' इति शब्दाभ्यां जायते। अन्यथा अपभ्रंशेषु शक्त्यभावादर्थबोधाभावः।[3]

सामान्यतः न्यायशास्त्रे लक्षणा द्वेधा निरूढलक्षणास्वारसिकलक्षणा चेति। तत्र अनादितात्पर्यवती लक्षणा निरूढा, शक्तितुल्या। विवक्षितार्थप्रतिसन्धानमूला स्वारसिकलक्षणा चेति। शक्तिभ्रमस्थले अनादितात्पर्यपरम्परायां निरूढलक्षणा स्वीक्रियते। ततः गगरीत्यादिवाक्यानां शाब्दबोधः। यत्र शक्यार्थे बाधस्तत्र बोधसम्पादनाय वाक्यप्रयोगसंरक्षणाय च निरूढलक्षणा स्वीक्रियते नैयायिकैः।

अपभ्रंसशब्दैरर्थबोधाय मीमांसायाः म्लेच्छाधिकरणमध्येतव्यम्। तत्र वैयाकरणास्तावत् म्लेच्छ (अपभ्रंस/भ्रान्ति/असाधु)प्रयोगेऽपि शक्त्या अर्थबोधो जायत इति स्वीकुर्वन्ति, शक्तिग्राहकशिरोमणिव्यवहारात्। न च असाधुशब्दात् साधुशब्दस्मरणद्वारा अर्थबोधः, साधुशब्दस्मरणं विनापि बोधोत्पादनानुभवात्, तद्वाचकसाधुशब्दम् अजानतां बोधानापत्तेश्च।[4] वैयाकरणाः शक्तिन्तु साध्वष्वसाधुषु उभयत्र मन्यन्ते, परञ्च पतञ्जलिना महाभाष्ये साधुशब्देनार्थबोधे एव धर्मोत्पत्तिरिति नियमः कृतः।[5] तेन यवपदस्य शक्तिः यथा दीर्घशूके, तथैव कङ्गौ इति वैयाकरणाः।[6] नैयायिकास्तावत् यवपदशक्त्या बोधः दीर्घशूकस्य, कङ्गोर्बोधस्तु शक्तिभ्रमादिति व्यत्यासः।[7]

1 'यदि तात्पर्यज्ञानं कारणं न स्यात्तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोधो न स्यात्', न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 351.

2. अकार्यगुह्ये कौपीनम्, अमरकोशः – 3-3-22.

3. शक्तं पदं चतुर्विधं क्वचिद् यौगिकम्।
क्वचित् रूढं, क्वचिद् यौगरूढं, क्वचिद् यौगिकरूढम् ।।19।। न्यायसिद्धान्तमुक्तावली, शब्दखण्डः, पृ. 315.

4. परमलघुमञ्जूषा, शक्तिप्रकरणम्।

5. वैयाकरणमहाभाष्यम्, पस्पशाह्निकम्।

6. सा च शक्तिस्साधुष्विवापभ्रंसेष्वपि शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात्। परमलघुमञ्जूषा, शक्तिप्रकरणम्।

7. वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात्प्रयोगः। न्यायसिद्धान्तमुक्तावली, शब्दखण्डः।

तथैव गमित्यजिपदयोः शक्यार्थः 'व्यापारमात्रम्', तथापि एतयोरनादितात्पर्यं लक्षणाविशिष्टबोधे (तत्तत्फलावच्छिन्नव्यापारबोधे) भवति। यथा द्वितीयाविभक्त्यर्थस्य अनादितात्पर्यं 'फलमात्रे' न भवति, अपि तु 'विशेषफले' यथा - 'गम्'धातुसमभिव्याहृतद्वितीयाविभक्तेस्तात्पर्यं संयोगरूपफलविशेषे, 'त्यज्'धातुसमभिव्याहृतद्वितीयाविभक्तेस्तात्पर्यं विभागरूपफलविशेषे, दृशधातुसमभिव्यहृतद्वितीयाविभक्तेस्तात्पर्यं विषयतारूपफलविशेषे भवति।

एवं द्वितीयाविभक्तिरहितवाक्येषु प्रथक् प्रथक् बोधो भवितुमर्हति। 'चैत्रः गच्छति' इत्यत्र 'गम्'धातुना लक्षणया संयोगानुकूलव्यापारबोधः, 'चैत्रः त्यजति' इत्यत्र 'त्यज्'धातुना लक्षणया विभागानुकूलव्यापारबोधश्च अनादितात्पर्यवशात् भवितुमर्हति। एवं द्वितीयाविभक्तिरहितधात्वर्थेष्वपि विलक्षणान्वयबोधो भवतीति।

अत्र पूर्वोक्तविवेचनाधारेण एवं वक्तुं शक्यते यत् - गदाधरभट्टाचार्यः नियममिमं प्रकटयति **'पदप्रयोगनियामकं न सर्वत्र शक्तिज्ञानम्, अपि तु यत्र शक्यार्थानुपपत्तिः, तत्र बोधसम्पादनाय शक्तिस्थाने अनादितात्पर्येण (निरूढलक्षणया) कार्यसिद्धिर्भवतीति।**

## 14. आक्षेपः - अनादितात्पर्यभ्रमः -

पदप्रयोगनियामकं शब्दवृत्तिस्थाने अनादितात्पर्यं स्यात्तदा कश्चन भ्रान्तजन एवं भ्राम्यति 'गम्'धातोरनादितात्पर्यं 'विभागावच्छिन्नव्यापारे', 'त्यज्'धातोरनादितात्पर्यं 'संयोगावच्छिन्नव्यापारे' चेति। एतेषूदाहरणेषु अनादितात्पर्यस्य भ्रमवशादेव 'गम्'धातुना विभागावच्छिन्नव्यापारस्य बोधो जायमानोऽस्ति। परञ्च नियमस्तावत् **'शक्तिभ्रमं लक्षणाज्ञानं चान्तरेण गम्यादेः विभागादिरूपफल-विशेषविशेषितस्पन्दादिबोधकत्वाभावनियमः'।**[1]

अयमाशयः - शक्तिभ्रमं लक्षणाज्ञानञ्च विना 'गम्'धातुना विभागावच्छिन्नव्यापारस्य बोधो नास्ति। प्रकृतोदाहरणे शक्तिभ्रमलक्षणाज्ञानाभ्यामतिरिक्तेन अनादितात्पर्यभ्रमेणापि 'गम्'धातुना विभागरूपफलस्य बोधोदयात्पूर्वोक्तनियमविरोधः।

## 15. समाधानम् - नियमाभावः -

**'शक्तिभ्रमं लक्षणाज्ञानं चान्तरेण गम्यादेः विभागादिरूपफलविशेषविशेषित-स्पन्दादिबोधकत्वाभावनियमः'** इति नियम एव नास्ति। अपि तु **'विना लक्षणाग्रहं भ्रमानधीनतादृशबोधो गमिप्रभृतितो न सम्भवति'**[2] इति नियमः। अयमाशयः - 'लक्षणाज्ञानेन भ्रान्त्या च 'गम्'धातुना विभागावच्छिन्नव्यापारस्य बोधः, नान्यथा। प्रकृतस्थले अनादितात्पर्यस्य भ्रमवशादेव हि 'गम्'धातुना विभागरूपफलविशेषविशेषितव्यापारस्य बोधो भवति। अतो नास्ति नियमविरोधः।

1. व्युत्पत्तिवादमूलपङ्क्ति। व्युत्पत्तिवादः, प्रथमभागः, तिरुपतिः, पृ. 207.
2. 'शक्तिभ्रमं लक्षणाज्ञानं चान्तरेण गम्यादेः विभागादिरूपफलविशेषविशेषित-स्पन्दादिबोधकत्व-अभावनियमः' असिद्ध एवेति, तात्पर्यभ्रमसह- कृतशक्तिप्रमया तादृशबोधजननेऽपि न क्षतिः। 'विना लक्षणाग्रहं भ्रमानधीनतादृशबोधो गमिप्रभृतितो न सम्भवती'त्येव नियमः। व्युत्पत्तिवादः, प्रथमभागः, तिरुपतिः, पृ. 207.

**16. आक्षेपः – अभ्रान्ताय भ्रान्तवाक्यात् बोधापत्तिः –**

कश्चन वक्ता भ्राम्यति 'गम्'धातोस्तात्पर्यं विभागावच्छिन्नव्यापारे इति। सः भ्रान्तवक्ता 'ग्रामं गच्छति' इति वाक्यं प्रयुङ्क्ते। तद्वाक्यस्य श्रोता भ्रान्तो नास्ति। तस्य शक्तिभ्रमतात्पर्यभ्रमलक्षणाज्ञानञ्चापि नास्ति। सः श्रोता जानाति 'गम्'धातुप्रयोगः संयोगबोधने एव। सः प्रमावान् श्रोता, भ्रमवतः वक्तुः भ्रामकवाक्यं यदा शृणोति। तदा सः श्रोता प्रसङ्गानुसारं वक्तुस्तात्पर्यम् अवगम्य 'ग्रामं गच्छति' इति वाक्यादपि 'ग्रामं त्यजति' इत्यर्थबोधं प्राप्नोति। एतदवस्थायां श्रोतुः लक्षणाज्ञानतात्पर्यभ्रम- स्याभावेऽपि 'गम्'धातुना विभागावच्छिन्नव्यापारस्य बोधो जायते। एतेन **'विना लक्षणाग्रहं भ्रमानधीनतादृशबोधो गमिप्रभृतितो न सम्भवति'** इति पूर्वप्रदर्शितनियमविरोधः।

**17. समाधानम् – तात्पर्यभ्रमः –**

प्रस्तुतावस्थायां श्रोता भ्रान्तो नास्ति। परञ्च तस्य 'गम्'धातुना त्यागबोधकारणं वक्तुस्तात्पर्यभ्रम एव, नान्यः।[1] अतो **'विना लक्षणाग्रहं भ्रमानधीनतादृशबोधो गमिप्रभृतितो न सम्भवति'** इति नियमविरोधो नास्ति।

**18. उपसंहारः –**

1. प्राच्यनैयायिकपक्षे 'व्यापारमात्रं धात्वर्थः' इति स्वीकारे समस्तधातुभिः समानार्थबोधापत्तिरापतति, सर्वव्यापाराणां समानत्वेन। तेन 'चैत्रः ग्रामं गच्छति' इत्यस्य स्थाने 'चैत्रः ग्रामं त्यजति' इत्यस्य प्रयोगः स्यादिति अविलक्षणबोधापत्तिरूपदोषः प्राच्यनैयायिकपक्षे समापतति। एतस्य दूषणोद्धारप्रकार एवम् – **'तत्तत्फलप्रकारकव्यापार- विशेष्यकशाब्दबोधं प्रति तत्तद्धातुजन्यव्यापारोपस्थितिः कारणम्'** इति शाब्दबोधाय कार्यकारणभावस्य व्युत्पत्तिनिर्माणम्। तेन संयोगप्रकारकव्यापारविशेष्यकशाब्दबोधाय 'गम्'धातुनोपस्थापितव्यापारस्य कारणता, एवञ्च 'विभागप्रकारकव्यापारविशेष्यक'शाब्दबोधाय 'त्यज्'धातुनोपस्थापितव्यापारस्य कारणता। तदनुसारं 'गम्'धात्वर्थव्यापारस्य बोधः 'संयोगप्रकारकव्यापारविशेष्यकः'। 'त्यज्'धात्वर्थव्यापारस्य बोधः 'विभागप्रकारकव्यापारविशेष्यकः'। एतेन 'गम्''त्यज्'धात्वर्थव्यापारेषु वैलक्षण्यम्। एवं सकर्मकधात्वर्थेषु विलक्षणबोधः संपादितः।

2. परम्, 'व्यापारमात्रं धात्वर्थः' इति पक्षे सकर्मकाकर्मकधात्वर्थेष्वविलक्षणबोधापत्तिः। 'गम्'धात्वर्थव्यापारः 'स्पन्द' धात्वर्थव्यापारश्च समानौ। धातोः धातोः पृथक्करणम्, तथा च सकर्मत्वाकर्मत्वविभाजनं फलाज्जायते। फलमत्र नास्ति धात्वर्थांशः। अतः 'ग्रामं गच्छती'तिवत् 'ग्रामं स्पन्दते' इति प्रयोगस्स्यात्। 'स्पन्द'धातोरकर्मकत्वात् प्रयोगोऽयमप्रामाणिकः। एतस्य दूषणोद्धारप्रकार एवम् – 'ग्रामं गच्छति' इति वाक्ये 'ग्रामः', 'संयोगः', 'गमनम्', 'कृतिः' इति पदार्थचतुष्टयस्योपस्थितिः। एतेषामेवोपस्थितिः 'ग्रामं स्पन्दते' इत्यनेनापि भवति। तथापि 'ग्रामं गच्छति' वाक्यात्

---

1. स च तात्पर्यभ्रमेणैव निर्वहति। व्युत्पत्तिवादः, प्रथमभागः, तिरुपतिः, पृ. 207.

'ग्रामनिष्ठसंयोगानुकूलगमनानुकूलकृतिः' इति यथा शाब्दबोधो जायते। तथा 'ग्रामं स्पन्दते' इति वाक्यादाकाङ्क्षाभावान्न जायते। यतो हि **'ययोर्यादृशान्वयबोधे आकाङ्क्षा, तदुपस्थापितयोरेव तादृशान्वयबोधः'** इति। अयमाशयः – विशिष्टपदेन पदार्थस्योपस्थितिसत्त्वे एव आकाङ्क्षा पर्यवस्यति, न तु येन केनापि पदेन उपस्थापितपदार्थसत्त्वे। यथा – प्रथममुदाहरणम् 'कृ' 'यत्' धात्वोस्समानार्थकसत्त्वेऽपि योऽन्वयबोधः 'घटं करोति' इति वाक्याज्जायते। स च 'घटं यतते' इति वाक्यान्न जायते। द्वितीयमुदाहरणम् 'घटनिष्ठकर्मत्वम्' इत्यन्वयबोधः 'घटम्' इति पदाज्जायते, स च 'घटः कर्मत्वम्' इति वाक्यान्न जायते। तृतीयमुदाहरणम् 'घटम् आनयति' इति वाक्यात् 'घटकर्मक- मानयनानुकूलकृतिः' इति यथान्वयबोधः, तथा 'घटः कर्मत्वम् आनयनम् कृतिः' इति वाक्यान्न भवति। चतुर्थमुदाहरणम् 'द्वारं पिधेहि' इति वाक्यात् 'द्वारकर्मकपिधानानुकूलकृतिः' इति यथान्वयबोधः, तथा 'द्वारं कर्मता पिधेहि', 'द्वारं पिधानं कृतिः' इत्यादिवाक्येभ्यो नास्तीत्युदाहरणानि। अतः पूर्वोक्तसिद्धान्तवशात् 'गम्'धात्वर्थव्यापारे फलान्वितत्वात् 'गम्'धातुः सकर्मकः। 'स्पन्द'धात्वर्थव्यापारे फलान्वितत्वाभावे 'स्पन्द'धातुरकर्मकः। **"फलान्वितव्यापारबोधकधातोरेव सकर्मकत्वम्"** एवञ्च **"फल-अनन्वितव्यापारबोधकधातोरेव अकर्मकत्वम्"** इति नियमयोर्प्रादुर्भाव इत एव जायते। 'गम्''स्पन्द'धात्वर्थव्यापारस्य अर्थसाम्येऽपि, न समानः व्यवहारः। यत्र 'गम्'धातोः सकर्मकत्वव्यवहारः, तत्रैव स्पन्दधातोरकर्मकत्वव्यवहारः। अतो द्वितीयाविभक्तियुक्तवाक्येषु सकर्मकाकर्मकधात्वर्थेषु आकाङ्क्षावशाद्विलक्षणबोधः।

3. तदनन्तरं 'चैत्रः गच्छति', 'चैत्रः त्यजति' इत्यादिद्वितीयाविभक्तिरहितवाक्येषु विलक्षणबोधः कथमिति प्रतिपादितम्। तद्यथा – कर्मप्रत्ययासमभिव्याहृतत्यागगमनादिपदानां 'तत्तत्फलावच्छिन्नव्यापारे' अनादितात्पर्यं कल्प्यते, तस्य प्रमाणिकप्रयोगनियामकत्वात्। 'चैत्रः गच्छति', 'चैत्रः त्यजति' इत्यादिद्वितीयाविभक्तिरहितवाक्यप्रयोगेषु यद्यपि धातोश्शक्तिः व्यापारमात्रे। तथापि धातोर्फलावच्छिन्नव्यापारे निरूढलक्षणा स्वीक्रियते। यत्र 'ग्रामं गच्छति चैत्रः' अपि च 'ग्रामं त्यजति चैत्रः' इत्यादिद्वितीयाविभक्तिसमभिव्याहृतवाक्यप्रयोगः, तत्र धातोश्शक्तिः व्यापारमात्रे। ग्रन्थकारेण एतद्विषये सिद्धान्तोऽयं प्रस्तुतम् – **'पदप्रयोगनियामकं न सर्वत्र शक्तिज्ञानम्, अपि तु यत्र शक्यार्थानुपपत्तिः, तत्र बोधसम्पादनाय शक्तिज्ञानस्थाने अनादितात्पर्येण ( निरूढलक्षणया ) कार्यसिद्धिर्भवतीति'**। अनादितात्पर्येणैव आकाङ्क्षानिर्माणम्। आकाङ्क्षया सकर्मकाकर्मकधातुविभाजनम्, पदार्थानां पारस्परिकान्वयोऽपि भवतीति।

4. ग्रन्थकारेण सकर्मकधात्वर्थेषु अविलक्षणबोधापत्तीति प्रथमदूषणोद्धारः 'तत्तत्फलप्रकारकव्यापारविशेष्यकशाब्दबोधं प्रति तत्तद्धातुजन्यव्यापारोपस्थितिः कारणम्' इति व्युत्पत्त्या कृतः। सकर्मकाकर्मकधात्वर्थेषु अविलक्षणबोधापत्तीति द्वितीयदूषणोद्धार आकाङ्क्षया कृतः। फलबोधकप्रत्ययस्याभावदशायामविलक्षणबोधापत्तीति तृतीयदूषणोद्धार अनादितात्पर्येण (निरूढलक्षणया) कृतः। पूर्वोक्तं पूर्वपक्षोत्तरपक्षयोः क्रमिकसंवादेन ज्ञायते यत्प्राच्यनैयायिकानां धात्वर्थविषये प्रदत्तस्य **'व्यापारमात्रं धात्वर्थः'** इति सिद्धान्तस्य स्वीकारोक्तौ दूषणानामुद्धारसंभवेन सिद्धान्तोऽयमिदानीं पर्यन्तं निर्दुष्टः।

## सन्दर्भसहायकग्रन्थावलिः


1. अन्नम्भट्टः. तर्कसङ्ग्रहः, चौखम्बा-सुरभारती-प्रकाशनम्, वाराणसी, 2003.
2. अमरसिंहः, अमरकोशः, चौखम्बा-विद्याभवनम्, वाराणसी, 2015.
3. उपाध्यायः, गिरिधरः. विभक्त्यर्थनिर्णयः, चौखम्बा-संस्कृत-सीरीज, वाराणसी, 1902.
4. कामाख्यानाथतर्कवागीशः (सम्पादकः), गंगेशोपाध्यायः, तत्त्वचिन्तामणिः (शब्दखण्डः), चौखम्बा-संस्कृत-प्रतिष्ठानम्, वाराणसी, 1990.
5. कीर्त्यानन्दः (सम्पादकः), व्युत्पत्तिवादः (गूथार्थतत्त्वलोकसंस्कृतटीकासहितः), चौखम्वा-अमर-भारति-प्रकाशनम्, वाराणसी, 1976.
6. गौडः, ज्वालाप्रसादः (सम्पादकः), व्युत्पत्तिवादः (शिवदत्तमिश्रकृतदीपिकासंस्कृतटीकासहितः), चौखम्बा-सुरभारती-ग्रन्थमाला (66), चौखम्बा-सुरभारती-प्रकाशनम्, वाराणसी, द्वितीयं संस्करणम्, 1983, पुनर्मुद्रितम्, 2010.
7. चतुर्वेदी, गिरिधरशर्मा परमेश्वरानन्दः भास्करश्च, वैयाकरणसिद्धान्तकौमुदी (वासुदेवदीक्षितकृतबालमनोरमा तथा च ज्ञानेन्द्रसरस्वतीकृततत्त्ववोधिनीसंस्कृतव्याख्यासहितः), खण्डानि 01-04, मोतीलालवनारसीदासः, देहली, 1958-61.
8. त्रिपाठी, ब्रह्मशङ्करः (सम्पादकः), भवानन्दः कारकचक्रम्, चौखम्वा-संस्कृत-सीरीज, वाराणसी, 1942.
9. त्रिपाठी, हरेरामः (सम्पादकः), व्युत्पत्तिवादः (सुदर्शनाचार्यकृतादर्शसंस्कृतटीकासहितः), राष्ट्रिय-संस्कृत-संस्थानम्, नवदेहली, प्रथमं संस्करणम्, 2011.
10. दासः, अच्युतानन्दः (सम्पादकः), व्युत्पत्तिवादः (कृष्णभट्टकृतकृष्णभट्टीया. धर्मदत्तकृतगूथार्थतत्त्वलोकः, सुदर्शनाचार्यकृतादर्शः, जयदेवकृतजया, शिवदत्तकृतदीपिका, लक्ष्मीनाथकृतप्रकाशः, वेणीमाधवशुक्लकृतशास्त्रर्थकला च संस्कृतव्याख्यासहितः, न्यूभारतीय-बुक-कॉरपॅरेशन, देहली, प्रथमं संस्करणम्, 2004.
11. मिश्रः, सच्चिदानन्दः (सम्पादकः), व्युत्पत्तिवादः (सम्पादककृतसुनन्दाहिन्दीव्याख्यासहितः), भारतीय-विद्या-प्रकाशनम्, वाराणसी, प्रथमं संस्करणम्, 2001.
12. व्युत्पत्तिवादः (जयदेवमिश्रकृतजयासंस्कृतटीकासहितः), मिश्रः, उमेशचन्दः (सम्पादकः), प्रयागनगरम्, 1988.
13. व्युत्पत्तिवादः (वेणीमाधवशुक्लकृतशास्त्रर्थकलासंस्कृतटीकासहितः), काशी-संस्कृत-ग्रन्थमाला (115), चौखम्बा-संस्कृत-संस्थानम्, वाराणसी, तृतीयं संस्करणम्, 1968, पुनर्मुद्रितम्, 2007.
14. शब्दशक्तिप्रकाशिका (कृष्णकान्ति एवञ्च प्रबोधिनीसंस्कृतटीकासहितः), चौखम्बा-संस्कृत-सीरीज, वाराणसी, 1934.
15. शास्त्री, भीमसेनः (सम्पादकः), लघुसिद्धान्तकौमुदी (सम्पादककृतभैमीहिन्दीव्याख्यासहितः), देहली, 1950-80.
16. शास्त्री, वेम्पटिकुटुम्बः (प्रधानसंपादकः). वैयाकरणभूषणसारः (के.वी.रामकृष्णमाचार्यकृतनृसिंहप्रियासंस्कृतव्याख्या-सहितः), श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेलावलः, सोमनाथनगरम्, गुजरातराज्यम्, 2015.
17. शुक्लः, कालिकाप्रसादः (संपादकः). वैयाकरणसिद्धान्तमञ्जूषा, नागेशभट्टः, संपूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, 1977.
18. श्रीकृष्णवल्लाभाचार्यः (सम्पादकः), विश्वनाथपञ्चाननभट्टाचार्यः, न्यायसिद्धान्तमुक्तावली (शब्दखण्डः), चौखम्बा-विद्याभवनम्, वाराणसी, 2005.
19. सतपथी, हरेकृष्णः (सम्पादकः), व्युत्पत्तिवादः (एन्.एस्.रामानुजताताचार्यकृतविद्वन्मनोरमासंस्कृतटीकासहितः), राष्ट्रिय-संस्कृत-विद्यापीठम्, तिरुपतिः, प्रथमं संस्करणम्, 2011.
20. Bhatt, V.P. Navya Nyaya Theory of Verbal Cognition (Critical Study of Gadadhar Bhattacharya's Vyutpattivada), 01-02, Deccan College, Poona, First Edition, 1996

